# Editorial

We are delighted to present the combined edition of volumes 75 and 76 of the Journal of Ganganath Jha Campus. We are publishing thirty one research papers in this issue by eminent scholars of different fields of the Indian knowledge system. This volume is decorated with research oriented articles on various branches of knowledge.

'संस्कृतग्रन्थानां वाक्यविश्लेषणं सम्बन्धविषयकचर्चाश्च' - This paper suggests the most suitable methodology for sentence analysis through machine, incorporating Eastern and Western elements. This methodology is derived from experiments and ideas related to the linguistic analysis found in Indian śābdabodha related texts.

'Śaivism in Tripurā' - This paper examines the nature and distinct characteristics of Śaivism in Ūnakoṭi and Tripurā, drawing insights from epigraphical and literary sources.

'Anaptyxis in Indian Linguistic Tradition : With Special Reference to the Prātiśākhyas' - This paper comprises an in-depth analysis of Anaptyxis found in ancient Indian linguistic tradition, specifically focusing on the pratiśakhyas.

'The Theory of Law of Karma (With Special Reference to Bhagvad Gītā)' - This fourth paper provides a comprehensive survey of the karma theory presented in the Bhagavadgītā. This theory has not only impacted the personal lives of Indian individuals but also serves as a motivational resource for philosophers.

'नीति का स्वरूप, आयाम और साध्य (संस्कृत वाङ्मय में नीति तत्त्व विमर्श के सन्दर्भ में)" - This paper presents a thorough examination of ethics (*nītiśāstra*), including its definitions and diverse dimensions, as depicted in *dharmaśāstras, purāṇas* and *smṛti* texts.

'The Bhagvadgītā with the World Views of Sāṁkhya Philosophy' - This paper elucidates the connection between the Sāṃkhya philosophy and the Bhagavadgītā.

'तैत्तिरीयोपनिषद् की शीक्षावल्ली में प्रतिपादित माता, पिता, अतिथि एवं आचार्य में देवत्व की अवधारणा' - This paper sheds light on the concept of divinity in the roles of mother, father, guests and teachers, drawing references from Vedic literature, particularly the Śikṣāvalli section of Taitirīya Upaniṣad.

'Compound Words (Samāsa) in the Indo-Aryan Languages' - This paper

presents a historical study of compound words (samāsa) in the domain of Indo-Aryan languages.

'The Doctrine of Mithyā in Advaita Vedānta' - This paper provides an analysis of the theory of mithyā based on foundational texts of Advaita tradition.

'A Brief Discussion to Establish the Existence of God by Udayana in Nyāyakusumāñjali' - This paper concisely establishes the existence of God based on the eight arguments presented by Udyan in Nyāyakusumānjalī.

'Scientific and Medicinal Evaluation of Harītakī (Terminalia Chebula) in Indian Perspective' - This paper establishes the scientific, medicinal and cultural qualities, as well as the significance of Haritiki in the Indian context.

'वैदिक यज्ञों में अनुप्रयुक्त – ज्योतिष' - This paper thoroughly elaborates the significance of astrology in Vedic yajñas.

'सौरभेयी के सुरभित सरगम' - This paper reviews a recently published work titled "Saurbheyi", authored by Prof. Janardan Prasad Pandey 'Mani'.

'Dharmakīrti on the classification of hetu: A critical Examination' - This paper offers a critical analysis of the concept of hetu in the context of its classification by Dingnagah and Dharmakirti.

'Influence of society in Sanskrit Grammar' - This paper endeavors to demonstrate the influence of society on Sanskrit grammar.

'रघुवंशे वशिष्ठाश्रमः'- This paper depicts the significance of the ancient Indian āśrama culture by describing the Vasiṣṭha-āśrama as portrayed in the epic Raghuvaṃśa.

'Śrī Kṛṣṇa as Skilled Diplomat: A Reassessment of the Mahābhārata' - This paper presents the increasing relevance of the Mahābhārata and the role of Shri Krishna in our daily lives. Shri Krishna from the Mahābhārata serves as a source of motivation for the human race as a diplomat, politician, thinker, ruler, philosopher and guide.

'अपच्छेदन्यायविमर्शः' - This paper provides a description, supported by proper evidence, of the various nyāyas that aid in clarifying doubts regarding Vedic sentences, as expounded by Jaimini Rishi in mimāṃsā philosophy.

'The Poet Who Captured The Quintessential And Physical Landsacape Of

Bharath: Kālidāsa' - This paper delves into the expansive physical landscape of Bhārata, as portrayed by Kalidasa in his literary works.

'Parallel Meaning Bank (PMB) में प्रयुक्त स्थानाधिकरण सम्बन्धी Discourse Representation Structures (DRS) की विवेचना' - This paper is centred around computational linguistics and focuses on standardising Discourse Representation Structure (DRS) roles for analysing sentences related to the parallel meaning bank. The article describes the application of these roles in sentence analysis.

'The subversive hold of Western frame of reference to core Indian philosophical thoughts' - This paper criticises the methodology applied by Western philosophers to interpret the fundamental concepts of Indian philosophy in the context of Western frameworks.

'Traces of Śivadharma and Śivadharmottara in the Śaiva Scriptures of Odisha' - This paper highlights the influence of Śaivadharma and Śaivadharmottara on Shaivite tradition of Odisha.

'Full Span of Human Consciousness: Readings and Practices from Māṇḍukya Upaniṣad, Yoga Sūtra, and the Vijñānabhairava Tantra' - This paper provides an in-depth study of the practice of Om and its impact on human consciousness and the cosmic model, drawing quotations from the Māṇḍūkya Upaniṣad, Yogasūtra and Vijñānabhairavatantra.

'Holistic Education for a better world with reference to 'Satyārtha-Prakāśa'' - This paper sheds light on the concept of holistic education for a better world, as described in the Satyārthaprakāśa with ample evidence.

'The Practice of Ṣodaśasaṁskāra in Kerala: Some Special Features' - The peculiarities and diversity of the sixteen traditional rituals (ṣoḍaśa-saṃskāras) in Kerala are depicted in this paper.

'लघुगुरुह्रस्वदीर्घोच्चारणकालावच्छिन्नत्वाभाववती' - This paper provides a systematic study of Panini's rules for different types of sandhi (combination of sounds) - guru, laghu, hrasva and dīrgha.

'The Glimpses on Bargītas and Their Musical Chronology' - This paper briefly explores Indian music and the Bargita of the sixteenth century, with a particular focus on its presence in Assam, particularly in relation to Sankaradeva and Madhavadeva.

'Epistemology of Verbal Knowledge in Indian Perspective' - This pa-

per presents a discussion on the purpose of the relation between the nature (vṛtti) of conscience and the Conscious Self (chitanya) in the self-realisation (aparokṣānubhūti) of knowledge.

'वृत्तिश्चेदुपरागः' - This paper discusses the form and significance of verbal testimony (śabdapramāṇa) in the epistemology of various branches of Indian philosophy.

'Development and Deployment of a Sanskrit Spellchecker based on Morphology for the Indian Language' - This presents the step-by-step development of a Sanskrit spellchecker based on morphology for Indian languages.

'The Concept of Pratibhā and its Implications; Gleanings from Vākyapadīya' - This paper elaborates the psychological and philosophical perspectives of the concept of pratibhā and its applications based on the principles outlined in the Vākyapadīya.

**Editors**



# CONTENTS

# संस्कृतग्रन्थानां वाक्यविश्लेषणं सम्बन्धविषयकचर्चाश्च

अम्बाकुलकर्णी एवच के. वी. रामकृष्णमाचार्युलु

सारांश

विशेषणविशेष्यभावमादाय वाक्यविश्लेषकस्य आकाङ्क्षायोग्यतादिकमनुसृत्य सम्यक् प्रतिपादितः सम्बन्धसमूहः अपेक्षितः। संस्कृतभाषाविषये शाब्दबोधग्रन्थेषु सम्बन्धविषयकविचाराः दरीदृश्यन्ते। नियमावलम्बि वाक्यविश्लेषकस्य यान्त्रिकस्य निर्माणाय ससूक्ष्मतया विवेचिता अपि इमे सम्बन्धाः सम्भाव्यतानुगुणं परीक्षिताः अस्माभिः। इदानीं वयमत्र प्राच्यपाश्चात्यप्रणाल्योः मध्यस्थां काञ्चित् प्रणालीमत्र प्रस्तोतुमिच्छामः या च आधुनिकभाषावैज्ञानिकपद्धतिं वृक्षमूलशाखोपशाखाप्रदर्शनरूपाम् आत्मसात् करोति, या च पूर्वोक्तां वैज्ञानिकपद्धतिम् अवगमनाय, सञ्चितविषयपुनरालोडनाय च इतोऽपि उपयुक्ततमां करिष्यति।

(मुख्यशब्दाः - संस्कृतम्, विश्लेषकम्, कारकसम्बन्धाः)

……………………

## 1. प्रस्तावना

वाक्यविश्लेषकं तावत् पङ्क्तिस्थानि पदानि एकाकृतौ विस्तारयति यया आकृत्या अथवा निर्माणेन अस्माभिः पदानां मध्ये विद्यमानसम्बन्धानां ज्ञानं स्पष्टरूपेण ज्ञायते। आङ्ग्लभाषादि पदक्रमस्थित्याधारितभाषाणां विश्लेषणं तु सुष्ठु प्रकटीक्रियते तासां स्थितिनिर्माणेनैव किन्तु, संस्कृतादिभाषाणां शब्दसंरचना बाहुल्यस्य आधिक्यात् निर्दिष्टक्रमं विना यथाकथञ्चित् प्रयोक्तुं शक्यत्वात् च तासां प्रस्तुतीकरणम् अस्माभिः वृक्षमूलशाखोपशाखारूपेण क्रियते। तत्र -

(1) **राजा विप्राय गां ददाति** (figure 1.1)।

इति वाक्यस्य सम्भावितविश्लेषणम् Figure 1.1 इत्यत्र द्रष्टुं शक्नुमः।




Figure 1.1 :

ग्रन्थाश्च ये शाब्दबोधसिद्धान्तप्रतिपादकाः वर्तन्ते ते तावत् वाक्यात् अवगमः कथं जायते इति तत्र विद्यमानेषु विभिन्नपदार्थेषु वर्तमानान् सम्बन्धान् आदाय वर्णयन्ति।

उदाहरणार्थम् अस्य वैयाकरणानां शाब्दबोधः -

**राजकर्तृकगोकर्मकविप्रसम्प्रदानकदानानुकूलो व्यापारः** इति।

वैयाकरणः यः कश्चित् वाक्यमिदं शृणोति तदा अस्मात् वाक्यात् तस्यावगमः एवं भवति अत्र दानक्रिया काचित् वर्तते यस्याः कर्ता राजा कर्म गौः सम्प्रदानं ब्राह्मणः इति।

किन्तु, नैयायिकानां तावत् अस्मात् वाक्यात् यः साधनविषयकबोधो जायते सः भिन्नो भवति। तेषां शाब्दबोधस्तु इत्थम् –

**गोकर्मकविप्रसम्प्रदानकदानानुकूलकृतिमान् राजा** इति।

तेषां मते बोधः एवं प्रकारेण भवति - वाक्येऽस्मिन् कर्ता राजा यतोहि दानक्रिया निरूपितं कर्तृत्वं तस्मिन् वर्तते तस्याः क्रियायाः कर्म गौः, ब्राह्मणः सम्प्रदानम् इति।

अत्र उभयत्रापि मुख्यविशेष्यं भिन्नं भवति। किन्तु, पदपदार्थयोः मध्ये विद्यमानानां सम्बन्धानाम् एकता अस्त्येव। साम्प्रदायिकव्याकरणपुस्तकेषु ये च विविधसम्बन्धाः वर्णिताः तान् सङ्कलय्य रामकृष्णमाचार्यमहोदयैः (2009) intersentential एवं intrasentential relations रूपेण वर्गीकृत्य संस्कृतग्रन्थानां कारकस्तरे व्याख्यानाय यत् सूचीनिर्माणं कृतं तदिदं कार्यं संस्कृतभाषायाः स्वयंचालितविश्लेषकयन्त्रस्य विकासाय च आरम्भबिन्दुः इव कल्पते।

अन्यभाषासु तथा आङ्ग्ले एतद्विषये यः विशेषपरिश्रमः कृतः तत्सर्वं PARC (king et al., 2003), Stanford dependency manual (Marneffe and Manning, 2008) इत्यादिषु वर्णितम्। एतत् सौभाग्यमस्ति यत् सम्बन्धानां निर्वचनाय संस्कृतभाषायां सुनिरूपितं समयपरीक्षितं च Tagset वर्तते। एतत् Tagset अस्माभिः कार्यद्वयस्य उपयोगाय स्थापयितुं शक्यते। 1) व्याख्यातव्यकोष (corpus) विकासाय एवं, 2) विश्लेषकविकासाय, येन तद्द्वारा प्रदत्तवाक्यस्य parse tree उत्पादयितुं शक्यते। (Tagset) इत्यस्य उपयोगात् प्राक् कश्चन प्रश्नः उदेति यत् अस्य सूक्ष्मेक्षणिका अस्ति तदुपर्युक्त कार्यद्वयाय योग्यं भवति उत न?

मानवीयाङ्कनाय उपयुज्यमाना अङ्कतालिका (Tagset) योग्या न वेति अधोनिर्दिष्टमानकाधारेण निर्णीयते।

- विविधानाम् अङ्कनानाम् आन्तरिकः परस्परसम्बन्धः अस्ति वा न वा?
- अङ्कनानि भ्रमजनकानि वा? यानि विश्लेषणे अनुपयुक्तानि, विश्लेषणस्यैव दुष्टत्वजनकानि।

साङ्ककीयविश्लेषकं यत् मानवीमङ्कनमुपयुङ्क्ते एते विषयाः अपेक्षिताः। परन्तु नियमावलम्बि वाक्यविश्लेषकस्य तु पूर्वोक्तविश्लेषकापेक्षया विभिन्नाः विचाराः आधारभूता भवन्ति। विश्लेषकं चेदं तावत् स्वतन्त्रं, सम्बन्धनिरूपणे समर्थं भवति, यावत् तावत् तत्तद्भाषागतवैशिष्ट्यादि विचारं विनैव वाक्यार्थबोधसमर्थ भवति। उदाहरणार्थं कुत्रचित् मानवीयाङ्कने कर्तुः उपविभागाः दृश्यन्ते यथा अनुभवीकर्ता, करणकर्ता, कर्मकर्ता इत्यादयः। हस्ताङिकतविषयः यदि अधिकः वर्तते तर्हि यन्त्रं कर्त्रनुभवकर्त्राः विद्यमानं भेदं सम्यक् अवगच्छति। अनुभवीकर्ता वा न वेति निर्णेतुम् क्रियायाः आर्थिकपक्षः आश्रयणीयः। कर्ता इति पदार्थो वा नेति वाक्यसंरचनेन एवं शब्दसंरचनेन च निश्चेतुं शक्यते। नियमाधारितविश्लेषकस्य निर्माणाय यल्लक्ष्यमस्माकम् अस्ति तत्प्राप्तये रामकृष्णमाचार्युलुमहोदयैः प्रतिपादितानि अङ्कनानि अस्माभिः सुष्ठु परीक्षितानि। गुणदोषपरीक्षणसमये केचन सामान्यनियमाः अनुसृताः ते च -

- सम्बन्धः द्विष्ठः स्यात्।
- सम्बन्धस्य निरूपकं चिह्नं वाक्ये अवश्यं विभक्तिरूपेण पदरूपेण वा भवेत्।

अन्यस्मिन् विभागे सम्बन्धानां प्रस्तुतीकरणं केन माध्यमेन क्रियत इति विवृतम्, तृतीयविभागे, सम्बन्धानां निष्कर्षसम्पादनाय विविधचिह्नानां विषये चर्चा चतुर्थे तु, सम्बन्धं चेतुं विविधविकल्पाः उपयुक्ताः, पञ्चमे तु सूक्ष्मेक्षणिकविषयकचर्चाः, षष्ठे तु इतोऽपि समुपयुक्तविश्लेषकं चिन्तनं च कृतम्।

## 2. सम्बन्धज्ञापनाय सङ्केतः -

सम्बन्धः द्विष्ठः इति पूर्वमेवोक्तम्। तत्र सम्बद्धपदार्थद्वयं a, b इति, तयोः सम्बन्धः R इति च सूच्यन्ते। निष्कर्षरूपेण वक्तव्यं चेत् 'b' इति पदार्थः, 'R' इति सम्बन्धवान्, यच्च सम्बन्ध 'a' द्वारा निर्धारितः/निरूपितः। तस्य चित्राङ्कनम् Figure 1.2 मध्ये द्रष्टुं शक्यते। द्वितीयचित्रे शरमुखं पश्यन्तु। अत्र पदार्थद्वयं यत् सम्बद्धं वृत्तद्वये प्रदर्शितम्। यत् a, b इति node पदेन अभिधीयते, तथा तौ उभौ बाणचिह्नेन परस्परं सम्बद्धौ प्रदर्श्येते। अत्र बाणचिह्नस्यैव नाम 'R' इति। अर्थात् अयं बाण एवं सम्बन्धं बोधयति। उदाहरणार्थम् एकं वाक्यं 'रामः गच्छति' इति स्वीकुर्मः। तद्वाक्यस्थपदद्वयस्य पूर्वोक्तचित्राङ्कनपद्धत्या अङ्कनम् Figure 1.3 मध्ये द्रष्टुं शक्नुमः।




Figure 1.2 : Figure 1.3 :

अङ्कनसौलभ्याय अस्माभिः चित्रमाध्यमं परित्यज्य, text माध्यमं स्वीकृत्य तत् tab द्वारा त्रिधा विभज्य पूर्वोक्तसम्बन्धसम्बन्धिनिरूपणमेवेत्थं क्रियते - तत्र प्रथमस्थाने वाक्यगतपदानां क्रमसङ्ख्या, द्वितीये पदं, तृतीये तस्य सम्बन्धविशेषः स च येन तत्पदसङ्ख्या च इत्येवम्। एतदेव 'रामः वनं गच्छति' इति वाक्यं स्वीकृत्य निरूपयामः –

1. रामः कर्ता, ३
2. वनं कर्म, ३
3. गच्छति

## ३. सम्बन्धनिष्कर्षाय चिह्नानि[1]

संस्कृतभाषा प्रकृतिप्रत्ययसंश्लिष्टा भाषा विद्यते। तत्र पदानि विभक्तिसंज्ञकप्रत्ययैः श्लिष्टानि भवन्ति। एते च विभक्तिप्रत्ययाः प्रकृत्यर्थभूतपदार्थस्य अन्यनिरूपितसम्बन्धं निर्धारयन्ति। एवमेव अव्ययान्यपि सम्बन्धमुपस्थापयन्ति। एतेषां समेषां विषये चर्चा अत्र अस्माभिः क्रियते।

1. **अभिहितत्त्वम्** -

   अनभिहिते[2] इति प्रधानसूत्रं भवति, यच्च प्रातिपदिकेभ्यः विभक्तिविधाने मुख्यभूमिकां स्वीकरोति। अत्र केन अनुक्ते इति प्रश्ने अत्र सूत्रे वार्तिकम् - तिङ्-कृत्-तद्धित-समासैः इति। विभक्त्याना बोधनीयः सम्बन्धः यदि तिङा (प्रधानक्रियावाचकप्रत्ययेन), कृता (by primary suffix) तद्धितेन (by secondary suffix) and/or समासेन (by compound) वा अनुक्तः भवति, अर्थात् सः तेषामर्थः न भवति।[3] इति अभिहितत्त्वम् एतैः ज्ञातुं शक्यते।

   (2) **रामः वनं गच्छति**। अत्र गच्छतीति क्रियापदं कर्तरिप्रयोगे अस्ति, अतः अत्र तिङ् प्रत्ययः कर्तारं बोधयति।

1 एतत् सर्वं कुलकर्णी महोदयायाः पत्रे चर्चितम् (2010)। विषयपूर्तये अयं प्रामाणिक एवं प्रासङ्गिको भागः अत्र पुनरुच्यते।

2 अष्टा. 2.3.1

3 म.भा. (2.3.1) वार्त्तिकम्

द्वितीयवाक्यं कर्मणि प्रयोगेऽस्ति यथा –

(3) **रामेण वनं गम्यते**। अत्र तिङ्प्रत्ययेन कर्म बोधितम्। एवम् उभयत्र क्रमशः कर्ता, कर्म च क्रमेण अभिहितं प्रथमाविभक्तौ भवति, यच्च क्रियापदेन सह समानवचनपुरुषव्यवस्थां भजति।

तिङ्प्रत्ययेन सह विसदृशाः कृत्-तद्धित-समासाः अपि नूतनप्रातिपदिकसम्पादने सहायकाः भवन्ति, यत्र पूर्वतनं प्रातिपदिकं/धातुम् आश्रित्य कृताः नूतनं प्रातिपदिकं सम्पादयन्ति। यथा -

(4) **धावन् अश्वः**। धावन् शब्दे वर्तमानः 'शतृ' इति कृत्-प्रत्ययः कर्तारं बोधयति, यः धावनक्रियां करोति।

2. **विभक्तिः** -
विभक्तिश्च इत्यनेन सूत्रेण सुप्तिङोः विभक्तिसञ्ज्ञा विधीयते। इतः प्राक् तिङ्प्रत्ययानाम् अभिहितत्वविषये दृष्टम्। अधुना सुबन्तान् पश्यामश्चेत् तेषां विभागः त्रिधा कर्तुं शक्यते।

   (a) **कारकसम्बन्धनिर्देशिका विभक्तिः** -
   सुप् एवं क्रियापदस्य च मध्ये वर्तमानः सम्बन्ध एव कारकसम्बन्धः इति अभिधातुं शक्यते। संस्कृते तावत् कारकाणि षट् वर्तन्ते तानि -

   "कर्ता कर्म च करणं सम्प्रदानं तथैव च।
   अपादानाधिकरणे चेत्याहुः कारकाणि षट् इति"॥

   षष्ठ्याः कारकत्वं नाङ्गीक्रियते। अतः सः सम्बन्धः सुबन्तयोर्मध्ये एव वर्तते।

   (b) **उपपदविभक्तिः** -
   पदान्तरयोगनिमित्तिका विभक्तिः उपपदविभक्तिः इत्यर्थः। प्रायः अव्ययानि उपपदशब्देन अभिधातुं शक्यन्ते। षष्ठीसम्बन्ध इव एतानि अव्ययान्यपि सुबन्तयोर्मध्ये सम्बन्धं निर्धारयन्ति। उदाहरणाय –

   (5) **रामेण सह सीता वनं गच्छति**। वाक्येऽस्मिन् सहशब्दः वर्तते तद्योगे तृतीयाविभक्तिर्भवति।

   (c) **विशेषविभक्तिः** -
   काश्चन विभक्तयः वर्तन्ते अन्यान् सम्बन्धान् निर्देष्टुम्। यथा -
   - अत्यन्तसंयोगः - मासमधीते इति उदाहरणम्। त्रिंशद्दिनात्मके काले अनवच्छेदेन अध्ययनं कृतम् इत्यर्थः तद्योगे द्वितीया।
   - क्रियाविशेषणम् - वेगेन धावति, मृदु पचति।
   - अङ्गविकारः - यथा अक्ष्णा काणः अत्र अक्ष्णि अवयवविकारः दृश्यते।
   - निर्धारणम् - समुदायात् एकदेशस्य पृथक्करणम्। यथा नरेषु श्रेष्ठः।
   - विभक्तम् - गोपालतः श्यामः अवरः अत्र पञ्चम्या विभागः दृश्यते।

3. **अव्ययानि** -
अव्ययानि अपि विविधान् सम्बन्धान् निर्धारयन्ति। यथा - निषेधः, समुच्चयः, प्रश्नः, अवधारणादयः। प्रायः अव्ययानि उपपदानि भवन्ति। कर्मप्रवचनीयसंज्ञायुक्तान्यपि अव्ययानि भवन्ति। तत्र विभक्तिरपेक्षिता वर्तते। किन्तु उपपदभिन्नाव्ययानां तावत् न तथा। उदाहरणार्थं न इत्यस्य सम्बन्धः गच्छति इत्यनेन सह वाक्ये कथमिति चेत् -

(6) **रामः गृहं न गच्छति**। अत्र वाक्ये न इति निषेधार्थकः।

तथैव मन्दम् इत्यस्य सम्बन्धः चलति इत्यनेन सह वाक्ये कथमिति चेत्-

(7) **रामः मन्दं चलति**। मन्दम् इति क्रियाविशेषणम्। एव इत्यस्य 'राम' इत्यनेन सह सम्बन्धः वाक्ये कथमिति चेत् -

(8) **रामः एव तत्र उपविशति**। एवकारः अवधारणार्थकः।

4. **सामानाधिकरण्यम्** -
सामानाधिकरण्यं लिङ्गसंङ्ख्याविभक्तिप्रत्ययैश्च भवेत्। अयं विशेषणविशेष्यभावोऽपि भवितुम् अर्हति -

(9) **श्वेतः अश्वः धावति**।

(10) **अश्वः श्वेतः अस्ति**।

प्रथमवाक्ये श्वेतः विशेषणम् अस्ति। द्वितीये तु विधेयविशेषणम् अस्ति।

## ४. सम्बन्धानां विकल्पाः तेषां प्रस्तुतीकरणम् -

चिह्नानि एतानि प्रश्नप्रेरकानि वर्तन्ते।

- किं सुप्तिङौ इव कृत्तद्धितौ समानतया आचरणीयौ/निरूपणीयौ वा?
- कथं द्योतकपदानि निरूपणीयानि? किं तेषां निरूपणं tree मध्ये node इव भवेत्?
- Intersentential relations प्रस्तुतिः कथं करणीया?
- सर्वनामशब्दानां पूर्वपरामर्शनिश्चयः अस्य भागो भवति उत न?

निश्चयप्राप्तये सामान्यनियमाः ये अनुस्रियन्ते अस्माभिः तत्र हेतवः अत्र निर्दिश्यन्ते –

1. वाक्ये विद्यमानपदानां तावत् एकस्य पदस्य अन्येन पदेन सह सम्बन्धस्थापनम्।
(अत्र भाषासम्बन्धापेक्षया Topological आवश्यकता अधिका वर्तते। यद्ययं नियमः शान्तः तर्हि विश्लेषणं Tree माध्यमेन आयाति सङ्गणकीयधर्मान्त्यक्त्वा[4]।)
2. कृत्तद्धितानां विषये सम्बन्धः सुप्तिङ्भ्यां क्रियते।
(इदमपि कारणं Topological आवश्यकताश्रितमस्ति)
3. कृदव्ययानाम् एवं तद्धिताव्ययानां विषये अस्माभिः तत्सम्बद्धप्रत्ययमादाय सम्बन्धः निश्चेतव्यः
(कृदव्ययानां विषये यत्र तिङः लोपः भवति, तत्र सम्बन्धः कृत्प्रत्ययगतविषयमाधारीकृत्यैव निर्धार्यते।)
4. सामान्याव्ययानां विषये तु पदान्येव परस्परं सम्बन्धं निर्धारयन्ति।
5. पदं वा प्रत्ययं वा सकृत् एव सम्बन्धं प्रस्तुतीकरोति।
(व्याख्यावसरे यः कश्चन शब्दसमुदायः वर्तते तत्र एकस्य शब्दस्य एक एव अर्थः भवति।)

अस्माभिः अधः विभिन्नविषयाणां वर्णनं तत्र नियमस्वीकारे हेतवश्च उच्यन्ते।

1. **अभिहितम्** - अभिधानं यत्र भवति तिङन्तमादाय सुबन्तस्य तत्र कर्तरिप्रयोगे एवं कर्मणिप्रयोगे च सुबन्तस्य विभक्तिरूपो परिणामः दृश्यते। अधुना कर्तरिप्रयोगे कर्तृसम्बन्धे कः मुख्यः? सुप् अथवा तिङ्? इति प्रश्नः उदेति? इतः प्राक् अस्माकम् आविष्कारः इत्थम् आसीत् a एवं b इति तौ तु R इति सम्बन्धेन सम्बद्धौ वर्तेते। अस्यार्थः b मध्ये R रूपो धर्मः अस्तीति वक्तुं शक्यते।

[4] अम्बाकुलकर्णी ह्यूएट् महोदयाय उपयुक्तचर्चायै धन्यवादान् वितनोति।

तत् a इत्यनेन ज्ञायते नाम a निरूपितं R b मध्ये वर्तते इति। रामः गच्छतीति वाक्ये रामः इत्यत्र विद्यमानः सुप्रत्ययः कमपि कारकसम्बन्धं न वक्ति।[5] अतः तत्र वाक्ये विद्यमानं नियममादाय रामे कर्तृत्वसम्बन्धः स्थाप्यते। किन्तु यदा कर्तृपदम् एव न भवति यथा केवलं गच्छामि इत्यादिषु तत्र यस्य कस्यापि सम्बन्धस्य उल्लेखः न क्रियते। अन्यदुदाहरणं पश्यामः यथा -

(11) **धावन्तम् अश्वं पश्य** (figure 1.4 and 1.5)। वाक्येऽस्मिन् क्रियापदद्वयं वर्तते। धावनक्रियैका दृशिक्रिया चापरा। धावन्तम् इत्यत्र शतृप्रत्ययः वर्तते तस्यार्थः कर्ता, अश्वः दृशिक्रियायाः कर्म भवति एवं धावनक्रियां प्रति कर्ताऽपि भवति एवमेव सामानविभक्तिकत्वात् धावन्तम् एवम् अश्वम् इत्यनयोर्मध्ये विशेषणविशेष्यभावात्मकः सम्बन्धोऽपि वर्तते। अधुना उदेति प्रश्नः यत् कः सम्बन्धः वक्तव्यः किम् अश्वः धावनक्रियायाः कर्ता इति उत दृशिक्रियायाः कर्म इति अथवा धावत् इत्यस्य विशेषणमिति वा उत सर्वमपि?




Figure 1.4 : Figure 1.5 :

यद्येतत्त्रयं स्वीक्रियते बाहुल्येन व्यावर्तनं भवति अश्वशब्दस्य। व्यावर्तनं यदस्ति तत् विश्लेषकस्य tree structure नाशयति। अतः अस्माभिः कृत्तद्धितप्रत्ययमाध्यमेन सम्बन्धं विहाय तिङन्तेनैव निर्दिश्यते।

अधुना कश्चन वदेत् यत् प्रदत्तवाक्यस्य प्रस्तुतीकरणं वर्तते तद्विश्वसनीयतां न भजते इति चेत् तत्र यस्य कस्यापि विषयस्य हानिर्न जाता। धावन्तम् इत्यत्र शतृप्रत्ययार्थः कर्ता वर्तते तत् तस्मिन्नेव अस्ति। किन्तु एतत्सर्वमनन्तरप्रक्रियायाम् उपयुज्यते। अत्र अधुना अग्रेसारणं किमर्थं क्रियते चेत् विद्यमानसङ्गणकीयसाधनान्युपयुज्य अस्माभिः graph तः tree रूपः निष्कर्षः प्राप्तुं शक्यते।

2. **अव्ययानाम् आचरणम् / व्यवहारः** -

किम् अव्ययपदं द्योतकरूपेण स्वीकरणीयम् उत वाचकरूपेण इति प्रश्नः उदेति? तत्र अव्ययानां विभागः त्रिधा कर्तुं शक्यते। कृदन्तम्, उपपदम् एवम् अवशिष्टम् इति।

- **कृदन्ताव्ययानि** -

  (12) **रामः दुग्धं पीत्वा शालां गच्छति** (figure 1.6)। अत्र पीत्वा इति कृदन्तमव्ययम्। पिब धातोः क्त्वा प्रत्यययोजनेन निष्पन्नमिदम्। क्त्वाप्रत्ययः पूर्वकालतारूपं सम्बन्धं मुख्यक्रियामाधारीकृत्य निर्धारयति। समानकर्तृकयोः पूर्वकाले[6] इति, अस्य सूत्रस्यार्थः

5 प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा अष्टा. (2.3.46)

6 अष्टा. 3.4.21

तदुदाहरणे स्पष्टीक्रियते। गमनक्रियायाः एवं पानक्रियायाश्च कर्ता राम एव भवति। अत्र पूर्वकालिकीक्रिया नाम पानक्रिया तदुत्तरमेव गमनक्रिया अतः पूर्वकालिकीक्रिया या वर्तते तत्र क्त्वाप्रत्ययः भवति। रामः कर्ता भवति पानक्रियायाः एवं गमनक्रियायाश्च। किन्तु, राम इत्यत्र यः सुप्रत्ययः वर्तते तत् सकृत् एकं सम्बन्धमेव वक्ति। कुत इति चेत् nodes मध्ये क्लेशः स्यात्। बहुविधव्यावृत्तयः भवन्तीति। बलात् एवं स्वीक्रियते चेत् tree structure भिद्यते। अतः रामः एवं पीत्वा इत्यनयोर्मध्ये कर्ता इति सम्बन्धः न निर्धार्यते। तावन्मात्रेण तत्र सम्बन्धः नास्तीति अस्माकमभिप्रायः न। तदधुना न क्रियते चेदपि अनन्तरप्रक्रियायाम् उपयुज्यते।




Figure 1.6 :

- **उपपदाव्ययानि** -

  उपपदाव्ययानि यथा सह इत्यादीनि यानि वर्तन्ते तेषां सुबन्तेन साकम् आकाङ्क्षा वर्तते विशेषविभक्तिसम्पादनाय। पाणिनेः सहयुक्तेऽप्रधाने[7] इति तृतीयाविभक्तिविधायकं सूत्रं वर्तते। सहयोगे तृतीयाविभक्तिर्भवति यथा रामेण सह इत्यादि। उदाहरणानि –

  (13) **सीता रामेण सह वनं गच्छति** (figure 1.7)।

  (14) **सीता दुग्धेन सह रोटिकां खादति** (figure 1.8)।

  प्रथमवाक्ये रामः सहकर्ता एवं द्वितीये दुग्धं सहकर्म भवति। अत्र कः कारकसम्बन्धः स्थापनीयः सह इत्यस्य इति निश्चयः कर्तव्यः यतोहि अत्र भाषाविषयकज्ञानमपेक्षितम्। अस्ति यत्र यन्त्रं बहूनि विश्लेषणानि उत्पादयति। एतत् Figure 1.7 एवं 1.8 माध्यमेन द्रष्टुं शक्यते।

[7] अष्टा. 2.3.19




Figure 1.7 :




Figure 1.8 :

अतः निष्कृष्टविश्लेषणसम्पादनाय सहयुक्तपदानां योग्यता द्रष्टव्या। सम्बन्धसङ्ख्यायाः न्यूनीकरणाय अस्य सह इत्यस्य सहसम्बन्धः इति साम्प्रदायिकं नाम स्थापितम्। तथापि कस्यापि विषयस्य लोपस्तु न भवति।




Figure 1.9 :




Figure 1.10 :

उपपदानि द्योतकरूपेणैव प्रवर्तन्ते वाचकापेक्षया। अतः पूर्वतनवाचकपदेन अस्माभिः उपपदं योजयितुं शक्यते एवञ्च तेनैव सम्बन्धोऽपि निर्धार्यते। अयं परिष्कारः युक्तश्चेदपि पदसङ्ख्यायाम् एवं nodes मध्ये तु समानता कदाचित् न भवेत्।

- **अन्यानि अव्ययानि** -

  कानिचन अव्ययानि यथा एव, इव न इत्यादीन्यपि अवधारण–सादृश्य–निषेधरूपेण सम्बन्धान् निर्धारयन्ति। एतान्यपि द्योतकान्येव। एकस्य एकैव सम्बन्धो भवति वाक्ये विद्यमानपदानां ग्राफ मध्ये nodes मध्ये च। एतत् संरक्षणाय अस्माभिः एतानि वाचकत्वेन रूपेण परिगणनीयम्। रामः एव वनं गच्छति (figure 1.11), एवं रामः वनं न गच्छति (figure 1.12) इति वाक्ययोः विश्लेषणम् Figure 1.11 एवं 1.12 माध्यमेन द्रष्टुं शक्यते।




Figure 1.11 :




Figure 1.12 :

3. **Inter-sentential सम्बन्धानाम् आचरणम् / व्यवहारः -**

ये च वाक्यद्वयं योजयन्ति ते Inter-sentential सम्बन्धाः उदाहरणाय -

(15) **यदि त्वम् इच्छसि तर्हि अहं भवतः गृहम् आगच्छामि** (figure 1.13)। त्वम् इच्छसि इति एकं वाक्यम् एवम् अहं भवतः गृहम् आगच्छामि इति अन्यत् एतत् वाक्यद्वयमपि यदि तर्हि इत्यनयोः योजनेन एकं वाक्यं सम्पद्यते. Figure 1.13 दर्शयति अभिप्रेतविश्लेषणम्।




Figure 1.13 :

नैयायिकास्तावत् यदि तर्हि इति एतौ प्रतियोगी अनुयोगी इति रूपेण स्वीकुर्वन्ति। तदा पदानां nodes मध्ये च समानता कदाचित् न भवेत्। यदि एवं तर्हि इत्यनयोः कस्यचन लोपः यदि भवति

तदाऽपि लुप्तपदम् अध्याहृत्य कर्तुं शक्यते। अनन्तरप्रक्रियासमये अस्माभिः कश्चन प्रकल्पः क्रियते त्यक्तपदानां यदि तर्हि इत्यादीनां ग्राफ् माध्यमेन सम्यक् अवगमनाय।

(16) **त्वम् इच्छसि तर्हि भवतः गृहम् आगच्छामि** (figure 1.14)।
(17) **यदि त्वम् इच्छसि अहं भवतः गृहम् आगच्छामि** (figure 1.15)।

एतयोः वाक्ययोः सम्बद्धानि चित्रेण Figure 1.14 एवं 1.15 क्रमेण दर्शितानि।




Figure 1.14 :




Figure 1.15 :

4. **सर्वनामशब्दानां पूर्वपरामर्शव्यवहारः -**

सर्वनामशब्दानां परामर्शस्य संकेतः सहसम्बन्धेन क्रियते। उदाहरणाय –

(18) **यत्र नार्यः पूज्यन्ते रमन्ते तत्र देवताः** (figure 1.16, 1.17 and 1.18)। वाक्यस्यास्य विश्ले-षकं प्रायशः Figure 1.16, 1.17, 1.18 मध्ये द्रष्टुं शक्यते।

अस्य वाक्यस्य द्विधा विश्लेषणानि भवन्ति। किन्तु वाक्यमेकमेव। यतोहि, एकमन्तरा अन्यस्य वाक्यस्य पूर्तिः न भवति।[8] तर्हि विश्लेषणानां कथम् एकत्वं सम्भवति इति चेत् Tree structure मध्ये स्थापनाय यत्र एवं तत्र पदयोः योजनमपेक्षितम्। यत्र एवं तत्र इति यत्तच्छब्दान्निष्पन्नानि सप्त-म्यन्तानि रूपाणि। यत्तदोः नित्यसम्बन्धः वर्तते। स च सम्बन्धः प्रातिपदिकरूपेणैव, न तु प्रत्ययरू-पेण। प्रत्ययानाधारीकृत्यैव सम्बन्धनिर्धारणं क्रियते न तु प्रातिपदिकरूपेण इति कृत्वा यत्तदोः मध्ये सम्बन्धस्य सत्त्वेऽपि तस्य निर्धारणं न क्रियते सः सम्बन्धः यः रेखामाध्यमेन दर्शितः Figure 1.17 इत्यत्र तत् सर्वं tree माध्यमेन प्रस्तुतीक्रियते।

5. **संयोजकानां वियोजकानां च व्यवहारः -**

अत्राऽपि काचित् समस्या वर्तते यत् अनयोः प्रस्तुतीकरणे कः मुख्यः इति। नैयायिकाननुसृत्य मुख्यः संयोजकावयवः अथवा वियोजकावयव एव इति।

8 अर्थैकत्वात् एकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्




Figure 1.16 :




Figure 1.17 :




Figure 1.18 :

(19) **रामः सीता लक्ष्मणः च वनं गच्छन्ति** (figure 1.19)। एतत् Figure 1.19 माध्यमेन प्रस्तु-तीकृतं। रामे, सीतायां, लक्ष्मणे च पृथक् कर्तृत्वं नास्ति एतत्सर्वं मिलित्वा च इत्यनेन पेटिकायां सूच्यते। च इति समुच्यार्थकमव्ययं समुच्चयस्तावत् त्रिषु वर्तते त्रिषु वर्तमानं यत् कर्तृत्वं च इत्यनेन क्रियायामन्वेति।
वाक्यद्वयस्य योजने तु यथा –

(20) **रामः शालां गच्छति पाठं च पठति** (figure 1.20)। एतत् Figure 1.20 माध्यमेन प्रस्तु-तीकृतम्। अत्र पठनक्रियायाः कर्ता रामः भवति। किन्तु विश्लेषणे तु तथा द्रष्टुं न शक्यते। यतोहि तज्ज्ञानमस्माकं तु येन केनापि पदेन न ज्ञायते अस्माभिः अनुमीयते चगतधर्मेण एतादृशम् अनुमानजनितं ज्ञानं यदस्ति तदनन्तरप्रक्रियासु द्रष्टुं शक्यते।

## 5. Granularity -

Granularity निश्चेतुं यः मापनदण्डः वर्तते सः सुलभः वर्तते। यः कश्चन एकसम्बन्धापेक्षया अन्यत् सम्बन्धमपि वदति शब्दसंरचनाम् एवं वाक्यसंरचनामाधारीकृत्य तर्हि तत् सम्बन्धद्वयमपि भिन्नमिति वक्तुं शक्यते। उदाहरणेन ज्ञातुं शक्यते। रामकृष्णमाचार्युलुमहोदयैः (2009) कर्तुः वर्गीकरणं कृतम्।

- अनुभवीकर्ता - उदा : घटो नश्यति।




Figure 1.19 :




Figure 1.20 :

- अमूर्तः कर्ता - उदा : क्रोधः आगच्छति ।
- प्रयोजोककर्ता - उदा : देवदत्तः विष्णुमित्रेण पाचयति ।
- प्रयोज्यकर्ता - उदा : देवदत्तः विष्णुमित्रेण पाचयति ।
- मध्यस्थकर्ता - उदा : देवदत्तः यज्ञदत्तेन विष्णुमित्रेण पाचयति ।
- अभिप्रेरक / उत्प्रेरककर्ता - उदा : मोदकः रोचते ।
- कर्मकर्ता - उदा : काष्ठः स्वयमेव भिद्यते ।
- करणकर्ता - उदा : असिः छिनत्ति ।
- षष्ठीकर्ता - उदा : आचार्यस्य अनुशासनम् ।

पूर्वोक्तेषु शब्दसंरचनां एवं वाक्यसंरचनां च आश्रित्य प्रयोजक–प्रयोज्य–षष्ठीकर्तृ निर्धारणं यन्त्रेणापि शक्यं प्रयोज्यमप्रयोजकयोः विषये प्रेरणार्थकक्रियापदस्वरूपं, तत्र सम्बद्धां विभक्तिं च आश्रित्य निर्धारणं शक्यम् । किन्तु, एतानि नालं भवन्ति । पर्याप्तिस्तु तथैव भवति योग्यतायाः सत्त्वे एव ।

उदाहरणाय – देवदत्तेन अन्नं पाचयति । अस्मिन् वाक्ये देवदत्तः प्रयोज्यकर्ता, एवम् देवदत्तः अग्निना अन्नं पाचयति । अस्मिन् वाक्ये अग्निः करणं भवति । अत्र द्वयोः वाक्ययोर्मध्ये देवदत्ताग्निशब्दौ प्रयोज्यक-र्तारौ एवं करणसाधनौ च भवितुमर्हतः । पर्याप्तता या वर्तते तत् पदार्थम् / वक्रारम् आदाय भवति । षष्ठी विषयेऽपि सम्बन्धः निर्धारणीयः यथा आचार्यस्य अनुशासनम् एवं काष्ठस्य ज्वलनम् इत्यत्र षष्ठी कर्तरि वर्तते उत कर्मणि इत्येतन्निर्धारणाय सम्बन्धः अपेक्षितः । योग्यता पदार्थेषु या वर्तते तदेव निष्कृष्टं सम्बन्धं वक्ति । एतेषां सम्बन्धानां विषये तावत् शब्दरचना एवं वाक्यरचना एतदुभयम् आवश्यकान् नियमान् कल्पयति । अन्येषां सम्बन्धानां विषये तु न तथा - शब्दसंरचनाम् एवं वाक्यसंरचनां च आदाय असिः छिनत्ति इत्यस्मिन् वाक्ये असिः करणकर्ता इति वक्तुं न शक्यते । असिः छिद् धातोः करणमपि भवितुमर्हति । करणकर्तृ एवं कर्मकर्तृविषये पदार्थः कर्ता एवं करणम् अथवा कर्म इति तेषां सङ्केतः सम्बद्धक्रियामाध्यमेन भवति तदा सम्बन्धान् निर्धारयितुं शक्नुमः । रामकृष्णमाचार्युलुमहोदयैः प्रतिपादितानां 103 tags ये वर्तन्ते तेषां परी-क्षणानन्तरम् अस्माभिः 31 सम्बन्धानां गणः स्वीकृतः यस्मिन् च शब्दवाक्यरचने एव मुख्यभूमिकां निर्वहतः ।

## 6. उपयुक्तविश्लेषणार्थम् -

उपर्युक्तनियमाः ये वर्तन्ते ते सङ्गणकरीत्या तु समीचीनाः वर्तन्ते। किन्तु, उपयोक्तृ / वक्तृ दृष्ट्या तु केचन समीचीनाः न भवन्ति। अपि च विषयनिष्कर्षेऽपि एतेषां सीमा वर्तते। विषयसङ्ग्राहकयन्त्रम् एवं सामान्यजनो वा यदि संस्कृतग्रन्थानाम् अवगमे आसक्तश्चेत् –

- उपपदसम्बन्धाः ये वर्तन्ते तत्र उपपदानां निर्धारणं द्योतकरूपेणैव न तु वाचकरूपेण कर्तव्यम्,
- वाक्यद्वयस्य सम्बन्धः अस्माभिः अनुयोगी, प्रतियोगी इत्यादि सामान्यपदापेक्षया कार्यकारणभावः एवं हेतुहेतुमद्भावादिभिः सम्बन्धैः निर्धारणीयम्,
- संयोजकवियोजकानां विषये अस्माभिः कारकाणां सहभागस्य सङ्केतः करणीयः,
- कृत्प्रातिपदिकानां विषये अस्माभिः कृत्प्रत्ययमादाय सम्बन्धाः निर्धार्यन्ते, एवम्
- सहसम्बन्धः दर्शनीयः यत्तदादि शब्दानां पूर्वपरामर्शविषये।

अनन्तरप्रक्रिया module एताः आवश्यकताः पूरयति। अनन्तरप्रक्रिया सोपाने अस्माभिः केचन सम्बन्धाः dotted arrows द्वारा दर्श्यते। पूर्वनिर्धारितसम्बन्धानाम् एवं अस्याञ्च निर्धारितानां भेदः ज्ञातुं शक्यते। Figure 21 एवं 22 वाक्यानां चित्राणि दर्शयन्ति (21) एवं (22) अनन्तरप्रक्रियायाः समाप्त्यनन्तरम् दर्शयन्ति।

(21) **रामः दुग्धं पीत्वा मोहनेन सह शालां गच्छति** (figure 1.21)।

(22) **रामः शालां गच्छति पाठं च पठति** (figure 1.22)।




Figure 1.21:




Figure 1.22 :

## 7. उपसंहारः -

संस्कृतवाक्यानि विश्लेषयितुं सम्बन्धानाम् अङ्कतालिकायाः (Tagset) निर्धारणाय ये विवादाः आसन्, पत्रेऽस्मिन् तेषां चर्चा कृता। अस्माभिः topological आवश्यकतापूर्तये द्विरवस्थितप्रक्रिया अनुसृता, यया पदानां nodes मध्ये च एकस्य एकेनैव सम्बन्धः भवेत्। एतेन बहुविधव्यावर्तनानि न भवेयुः।

विषयविश्वसनीयता एवं विषयसङ्ग्रहणाय वयं विश्लेषितवृक्षशाखायाः (parsed tree) प्रक्रियाम् अनन्तरं निर्वहामः। एवं a) nodes नाशः करणीयः द्योतकपदानुगुणम्। b) स्पष्टसहभागस्य विषये सम्बद्धसमाचारः एवं c) सहसम्बन्धस्य प्रदर्शनम्।

एतस्य द्विरवस्थितविश्लेषकस्य उपकरणस्य संस्कृत-हिन्दी-यन्त्रानुवादस्य अन्तर्गतत्वेन http ://sanskrit.uohyd.ernet.in/acl/SHMT/shmt.html इत्यत्र अस्य उपलब्धिः भवति।

## 8. विज्ञापना -

उपयुक्तसूचनाः दत्तवद्भ्यः अनामिकसमीक्षेभ्यः लेखकाः धन्यवादान् वितरन्ति। इदं कार्यं तावत् भागः sanskrit consortium project या वर्तते संस्कृतसङ्गणकसाधनानि एवं संस्कृत-हिन्दी यन्त्रानुवादयोः विकासः (Development of Sanskrit computational tools and Sanskrit-Hindi Machine Translation system) इति TDIL प्रायोजककार्यक्रमः DIT भारतसर्वकारस्य वर्तते। पत्रस्यास्य अनुवादकः पवनकुमारः (शोधच्छात्रः संस्कृताध्ययनविभागः हैदराबाद विश्वविद्यालयः)

## A उपन्यस्तसम्बन्धानां पेटिका -

| | | | |
|---|---|---|---|
| कर्ता | करणम् | अधिकरणम् | हेतुः |
| क्रियाविशेषणम् | उपपदसम्बन्धः | समुच्चितम् | समानकालः |
| प्रयोज्यकर्ता | सम्प्रदानम् | सम्बोधनसूचकम् | प्रयोजनम् |
| विशेषणम् | सम्बन्धः | अन्यतरः | अनन्तरकालः |
| प्रयोजककर्ता | अपादानम् | सम्बोध्यः | तादर्थ्यम् |
| शेषसम्बन्धः | प्रतियोगी | कर्तृसमानाधिकरणम् | पूर्वकालः |
| कर्म | षष्ठीसम्बन्धः | निषेध्यः | निर्धारणम् |
| अनुयोगी | कर्मसमानाधिकरणम् | वीप्सा | |

## शब्दसंक्षेपः

1. अष्टा. - अष्टाध्यायी
2. म.भा. - महाभाष्यम्

## सन्दर्भग्रन्थसूची


1. Bharati, Akshar & Rajeev Sangal, Parsing Free Word Order Languages in the Paninian Framework. In Proc. Of ACL : 93.
2. Bharati, Akshar, Vineet Chaitanya & Rajeev Sangal, Natural Language Processing : A Paninian Perspective. Prentice-Hall, New Delhi, 1995
3. Bhattacharya, Gadadhara, Vyutpattivadah. Chaukhamba Sanskrit Sansthanam, Varanasi, 1988.
4. Carroll, John, Guido Minnen, & Ted Briscoe, Corpus annotation for parser evaluation. In Proceedings of the EACL, 1999

5. Charniak, Euguen & Mark Johnson, Coarse- to-fine n-best n-best parsing and MaxEnt discriminative re-ranking. In Proceedings of the 43rd annual meeting of the ACL, pp. 173-180. 2005

6. Copestake, Ann & Dan Flickinger, An open-source grammar development environment and broad-coverage English grammar using HPSG. In Proceedings of the Second conference of Language Resources and Evalution (LREC-2000), Athens, Greece.

7. King, Track H., Richard Crouch, Stefan Riezler, Mary Dalrymple, & Ronald Kaplan, The PARC 700 dependency bank. In 4th International Workshop on Linguistically Interpreted Corpora (LINC-03)

8. Krishnamacharyulu, K V R, Annotating the Sanskrit Texts based on the sabdabodha systems. In 3rd International Sanskrit Computational Symposium, Ed. Amba Kulkarni and Gerard Huet, LNAI Springer Verlag, 2009

9. Kulkarni, Amba, Devanad Shukl and Sheetal Pokar, Mathematical modelling of Akanksha and Sannidhi for parsing Sanskrit. In 15th World Sanskrit Conference, 2012, Delhi.

10. Kulkarni, Amba, Sheetal Pokar and Devanad Shukl, Designing a constraint based parser for Sanskrit. In 4th International Sanskrit Computational Symposium, Ed. G N Jha, LNAI Springer Verlag, 2010

11. Marneffe, Marie-Catherine de & Christopher D. Manning, The Stanford typed dependencies representation. In COLING Workshop on Cross-framework and Cross-domain Parser Evaluation, 2008.
http//nlp.stanford.edu/pubs/dependencies-coling08.pdf.

12. Schroder, I., Natural Language Parsing with Graded Constraints. PhD thesis, Hamburg Univ. 2002

13. Tatacharya, N S R, Sabdabodhamimamsa : The sentence and its significance. Part-I, Institute of Pondicherry and Rashtriya Sanskrit Sansthan, New Delhi, 2005



# रघुवंशे वशिष्ठाश्रमः

सूर्यप्रकाश शुक्लः

प्राचीनकालादेव आश्रमाः लोकशिक्षाकेन्द्रत्वेन प्रतिष्ठिताः आसन्। भारतीय संस्कृतिः ऋषीणां मुनीनां चाश्रमेषु एव पल्लविता पुष्पिता च जाता। ऋषयः मुनयश्च आश्रमेषु एव उषित्वा समाजस्य मार्गदर्शनं कुर्वन्ति स्म। आश्रमाः प्रायशः ग्रामात् नगरात् वा दूरे वनेषु नद्यास्तीरेषु वा भवन्ति स्म। आश्रमान् आश्रित्य एव ते तत्त्वचिन्तनपरायणाः आसन्। लोककल्याणमेव तेषां मनस्सु प्रमुखोद्देश्यम् आसीत्। यद्यपि ते ऋषयः सर्वथा भौतिकसुखनिरपेक्षाः निस्पृहाः लोकचिन्तनपरायणाश्चासन् तथापि तेषां संरक्षणस्य दायित्वं राजानः स्वयमेव उद्वहन्ति स्म। आश्रमेषु प्रतिदिनं अग्निहोत्रादिकर्मसम्पादनं नित्यमेव भवति स्म येन पर्यावरणमपि सुतरां परिशुद्धं भवति स्म। तेषां दैनन्दिनं जीवनं त्यागमयं साधनानिरतं स्वाध्याययुतं चासीत्। अहर्निशं ते भगवदाराधनेन सह लोककल्याणमपि चिन्तयन्ति स्म। अयम् ऋषीणां साधनाप्रभावः एवास्ति यत् तत्रत्याः वनानां वातावरणं सर्वथा रमणीयं हृद्यं सर्वजीवसुखावहं चासीत्। तत्रैव वेदाध्ययनपरम्परापि प्रचलति स्म। अनेनैव कारणेन वेदानां पर्यायभूतः एकः शब्दः 'श्रुति' इति नाम्ना प्रथितः जातः। ऋषयः वनेषु यथोपलब्धकन्दमूलफलानि स्वीकृत्य साधनापरायणं जीवनं यापयन्ति स्म।

आश्रमाः अस्माकं भारतीयसंस्कृतेः प्रमुखाङ्गत्वेन प्रथिताः सन्ति। अनेनैव कारणेन संस्कृतसाहित्ये अरण्यानां वनानां च कविभिः सम्यक् वर्णनं कृतमस्ति। ऋग्वेदे तु वनानां महत्त्वम् अङ्गीकृत्य अरण्यानीसूक्तमेव विलसति। वस्तुतः संस्कृतसाहित्ये कालिदासस्य सर्वप्रमुखं स्थानं विद्यते। तस्य महाकवेः काव्येषु भारतीयसंस्कृतेः भारतीयदर्शनस्य च सम्यक् चिन्तनं कृतमस्ति। अतः कनिष्ठिकाधिष्ठितकालिदासः बहुविधप्रतिभासम्पन्नः कविः विद्यते येन न केवलं रघुवंशं कुमारसंभवं महाकाव्ये विरचिते अपितु गीतिकाव्यत्वेन ऋतुसंहारं तथा मेघदूतम् इति खण्डकाव्यमपि रचितम्। अभिज्ञानशाकुन्तलं, मालविकाग्निमित्रं, विक्रमोर्वशीयं च इति त्रीणि नाटकान्यपि तेन महाकविना रचितानि यानि सहृदयानां चेतांसि समाह्लादयन्ति। सन्दर्भेऽस्मिन् रघुवंश महाकाव्यस्य प्रथमसर्गमधिकृत्य वशिष्ठाश्रमस्य विवेचनमभीष्टं विद्यते।

आश्रमवासिनां मुनीनां जीवनं सर्वथा त्यागमयं निस्पृहं सुतरां पवित्रं च भवति। तेषां सर्वाणि कार्याणि यज्ञसाधनाय एव भवन्ति। राजा दिलीपः महर्षेः वशिष्ठस्य आश्रमं सायंकाले प्राप्नोत्। तत्र सः पश्यति यत् आश्रमं तपस्विभिः पूर्यमाणम् अस्ति। मुनयः यज्ञकर्मसम्पादनाय विभिन्नेभ्यः वनेभ्यः समिधः कुशान् फलानि च आदाय आश्रमम् आगच्छन्ति। तेषां मुनीनाम् अलौकिकः प्रभावः अपि दृग्गोचरः अभवत्। यतः होमाग्नयः अदृश्याः तान् ऋषीन् प्रत्युद्गच्छन्ति। अग्नीनाम् ऋषिभिः सह गृहस्थसमाजोचितः व्यवहारः दरीदृश्यते। एवं प्रतिभाति यत् यज्ञकाष्ठादिहवनीयभोज्यपदार्थलोभात् अग्नयः ऋषीन् प्रति प्रत्युत्थाय स्वागतं कार्तज्ञ्यं वा निवेदयन्ति।

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः।
पूर्यमाणमदृश्याग्नि प्रत्युद्यातैस्तपस्विभिः॥[1]

वस्तुतः आश्रमस्थमुनीनां जीवनं समेषां प्राणिनां कृते सुखावहम् अभयदायकं च भवति। वशिष्ठाश्रमे नीवारभागलोलुपाः मृगाः निर्भयाः सन्तः उटजद्वाराणि संरुध्य तिष्ठन्ति। मुनिपत्नीनां व्यवहारः तान् प्रति अपत्यैरिव विद्यते। अनेन मुनीनां प्राणिस्नेहः सिद्ध्यति। ऋषयः वने कठोरव्रतमाचरन्ति। ते भौतिकसुखसाधनानि संत्यज्य तृणनिर्मितासु उटजेषु पर्णशालाषु वा निवसन्ति।

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः॥[2]

1 रघु., 1/49
2 रघु., 1/50

पर्णशालाप्राङ्गणभूमिषु हरिणः सुखेन निषण्णाः सन्तः निर्भयाः भूत्वा चर्वितचर्वणां कुर्वन्ति।

आतपात्ययसंक्षिप्त नीवारासु निषादिभिः।
मृगैर्वर्तितरोमन्थमुटजाङ्गणभूमिषु॥[3]

ऋषिबालाः अपि सर्वथा जीवान् प्रति संवेदनशीलाः सन्ति। यतः तत्र वृक्षाणां सेचनं कृत्वा ऋषि बालाः तस्मात् किञ्चित् दूरमपसरन्ति। येन पक्षिणः निर्भयाः भूत्वा आलवालस्थितं जलं पिबेयुः। ताः जानन्ति चेद् वयम् आलवालसमीपे स्थास्यामः तर्हि विहङ्गमाः अस्माकं भयात् जलं पातु न आगमिष्यन्ति। अत्र मुनीनां पादपान् प्रति स्नेहः तथा पक्षिणः प्रति स्नेहसिक्ता संवेदनशीलता दृश्यते। वस्तुतः 'वृक्षाः पर्यावरणसंरक्षणे तथा स्वस्थपर्यावरणविनिर्माणे महतीं भूमिकां निर्वहन्ति' इति जानन्तः मुनयः मुनिकुमारकाश्च वृक्षाणां संवर्धनाय तेषां नित्यं सेचनं कुर्वन्ति। स्वकीयेन ईदृशेन कार्येण समाजे पर्यावरणचेतनां जनयन्ति। पर्यावरणं सर्वथा संरक्षणीयम् इति जनान् बोधयन्ति।

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम्॥[4]

सायंकाले मुनयः हवनादिकर्मसु संलग्नाः दृश्यन्ते। आश्रमे हवनद्रव्यभूतघृतादिकितः आहुतिगन्धिभिः धूम्रैः वातावरणं पवित्रं जातम्। तत्रागतान् अतिथीन् अपि पुनाति। अर्थात् वातावरणं सर्वथा पावनं संजातम्। अनेन इदं प्रतिपादयति यत् तत्र अतिथिसेवा अपि भवति।

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान्।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः॥[5]

वस्तुतः अतिथिसेवा तु गृहस्थानां कृतेऽपि पञ्चमहायज्ञेषु अन्यतमः यज्ञः विद्यते यत् नृयज्ञेति नाम्ना ज्ञायते। सभार्यः महाराज्ञः दिलीपस्य आश्रमे प्राप्ते सति तयोः स्वागतम् अभवत्। यद्यपि वशिष्ठः तपोनिधिः सिद्धः मुनिः तथा तत्र सर्वे भौतिकसुखनिरपेक्षाः एव निवसन्ति किन्तु तेषाम् अतिथिसत्कारविषयको व्यवहारः सर्वथा भारतीय संस्कृतेरनुरूपः श्लाघ्यः प्रेरकश्चास्ति।

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे॥[6]

तत्र ऋषयः सन्ध्याकालभवस्य जपहोमादे अनुष्ठानस्य सम्यक् सम्पादनं कुर्वन्ति। दिलीपः स्व-भार्यया अरुन्धत्या सह स्थितं तपसा देदीप्यमानं वशिष्ठम् अपश्यत्। अत्र वशिष्ठ-अरुन्धत्योः स्थितिं सूचयन् महाकविः कालिदासः यत् औपम्यविधानं विदधाति तत् सर्वथा आश्रमसंस्कृतिम् अभिव्यनक्ति – "अन्वा-सितमरुन्धत्या स्वाहयेव हविर्भुजम्"[7]। अर्थात् अरुन्धत्या सह तत्र समासीनं वशिष्ठं स्वपत्न्या स्वाहया सह स्थितम् अग्निमिव दृष्टवान्।

यद्यपि अस्मिन् प्रसङ्गे महाकविना कालिदासेन संक्षिप्तरूपेणैव आश्रमस्य चित्रणं कृतमस्ति तथापि वर्णनमिदम् आश्रमसंस्कृतिं दिनचर्यां मुनीनाम् उदात्तचिन्तनं सर्वान् जीवान् प्रति संवेदनां तेषां करुणाम्

3 रघु., 1/52
4 रघु., 1/51
5 रघु., 1/53
6 रघु., 1/55
7 रघु., 1/56

आत्मवत् दृष्टिं च परिलक्षयति। यद्यपि आश्रमवासिनः मुनयः भोगविषयान् विहाय ग्रामात् दूरं वनेषु निवसन्ति किन्तु विश्वकल्याणं तेषां ध्येयमस्ति। ते "मित्रस्य चक्षुषा समीक्षामहे", "मां हिंस्यात् सर्वभूतानि" इति शास्त्रोपदेशं स्वजीवने सुतरां चरितार्थयन्ति।

## शब्दसंक्षेपः

1. रघु. - रघुवंशम्

## सन्दर्भग्रन्थसूची

1. कालिदास, रघुवंशम्. खेमराज श्रीकृष्णदास (सम्पा.), श्रीवेङ्कटेश्वर प्रेस, बंबई, १८२९ शक



# अपच्छेदन्यायविमर्शः

देबनाथ पाल

सारांश

मीमांसादर्शने जैमिनिना वेदवाक्यार्थसंशयनिरसनाय सूत्रैः न्यायाः संग्रथिताः। ते च न्यायाः विशेषतो द्विविधाः - वाक्यार्थतात्पर्यनिर्णायकाः, अनुष्ठानकालीनसंशयनिवारकाश्च। तेषु अनुष्ठानकालीनसंशयनिवारकेषु न्यायेषु अन्यतमतां धत्ते अपच्छेदन्यायः। प्रस्तुतेऽस्मिन् प्रबन्धे अपच्छेदन्यायस्य स्वरूपं समालोच्य कुत्र कुत्र अपच्छेदन्यायः प्राप्तावसरस्तथा किञ्च तत्प्रवृत्तिनिमित्तं के वा तत्प्रतिबन्धका इत्येतत्सर्वं यथामति प्रतिपाद्य परिशेषे शास्त्रान्तरेषु तत्सञ्चारः प्रदर्शितः।

(मुख्यशब्दाः - उपसंहारः, उपक्रमः, अपच्छेदः, ज्योतिष्टोमः, प्रसर्पणम्, अन्वारब्धाः, प्रतिहर्ता)

……………………

## उपक्रमः

षड्विधेषु आस्तिकदर्शनेषु अन्यतमतां धत्ते जैमिनीयं पूर्वमीमांसाशास्त्रम्। तच्च शास्त्रं वेदवाक्यार्थसंशयनिरसनाय प्रवृत्तत्वात् वाक्यशास्त्रमित्यपि आचक्ष्यते। तस्मिन् च शास्त्रे वेदवाक्यार्थसंशयनिरसनाय जैमिनिना सूत्रैः न्यायाः संग्रथिताः। ते च न्यायाः विशेषतो द्विविधाः - वाक्यार्थतात्पर्यनिर्णायकाः, अनुष्ठानकालीनसंशयनिवारकाश्च। तेषु अनुष्ठानकालीनसंशयनिवारकेषु न्यायेषु अन्यतमतां धत्ते अपच्छेदन्यायः।

## अपच्छेदन्यायस्वरूपम्

ननु किंस्वरूपोऽसौ इति चेदत्रेदं वक्तव्यं यत् ज्योतिष्टोमयागे प्रातःसवने बहिस्पवमानस्तोत्रेण स्तोष्यमाणाः ऋत्विजः अन्वारब्धाः सन्तः हविर्धानमण्डपात् प्रसर्पणं कुर्युः। प्रसर्पणञ्च पिपीलिकाबद्धपंक्तिरूपेण कार्यम्। तस्मात् सर्वे स्वस्वपुरोवर्तिनः पुंसः कच्छं हस्ते धृत्वा प्रसर्पेयुः। तत्रादौ अध्वर्युः, ततः प्रस्तोता, ततः उद्गाता, ततः प्रतिहर्ता, ततः ब्रह्मा, ततो यजमानः, ततश्च प्रशास्ता इत्येवं क्रमेण पुरोवर्तिपुरुषकच्छं स्पृशन्तः सर्वे प्रसर्पेयुः। एवमेव इमे बहिस्पवमानदेशमुपेत्य पूर्वगृहीतं कच्छं विसृजेयुः। प्रोक्तमेतत् प्रसर्पणं वेगेन भवति। तत्फलतया मध्ये अन्वारम्भविच्छेदस्तथा अपच्छेदः शक्यसम्भव एव। तत्रापि आदौ सत्त्वात् अध्वर्योरपच्छेदः असम्भव एव।एवं ब्रह्मकर्तृकक्रियाजन्यापच्छेदः प्रायश्चित्तनिमित्तं न भवति। तत्फलतया अध्वर्युब्रह्मणोर्मध्ये विद्यमानानां प्रस्तोतादीनामपेच्छेदः प्रायश्चित्तनिमित्तं भवतीति सिद्धम्।

तत्रापि समेषाम् अपच्छेदनिमित्तं प्रायश्चित्तं तु नाभिन्नम्। तथाम्नातम् - "यदि बहिष्पवमानं सर्पतां प्रस्तोताऽपच्छिद्येत यज्ञस्य शिरश्छिद्येत। ब्रह्मणे वरं दत्त्वा स एव पुनर्वर्तव्यः। यदि प्रतिहर्ता पशुभिर्यजमानो व्यृध्येत, सर्ववेदसं दद्यात्।

यद्युद्गाता यज्ञेन यजमानो व्यृध्येत, अदक्षिणः स यज्ञः संस्थाप्यः। अथान्य आहृत्यः तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यादि"ति[1]। एवम् ऋत्विग्भेदेन प्रायश्चित्तभेदः समाम्नातः।

ननु युगपद् द्वयोरपच्छेदश्चेत् तत्र किं कर्तव्यमिति चेदत्रेदं वक्तव्यं यद् अपोपसृष्टात् छिद्धातोः घञ्प्रत्ययेन अपच्छेदशब्दो निष्पत्तिमेति। अपच्छेदो नाम विभागः। स च विभागः सदैव अन्यतरक्रियाजन्यस्तथा उभयक्रियाजन्यश्च भवति। तद्यथा वृक्षात् पक्षी उड्डीयते इत्यत्र वृक्षपक्षिविभागः पक्षिक्रियाजन्यः, पथिमध्ये परस्परालिङ्गिते मित्रे मेलनानन्तरं युगपद् विसृष्टे इत्यत्र उभयमित्रविभागः उभयक्रियाजन्यः। अत्रापि विभागः

1 Āpa.sū., - 14/26/03-06, (Calcutta: Asiatic Society, 1885) p.607-608

उभयक्रियाजन्य एव। तेन अपच्छेदे द्वयोर्मिलितयोर्कर्तृत्वात् कस्यापि निरपेक्षकर्तृकत्वाभावात् एकैककर्तृकापच्छेदनिमित्तं प्रायश्चित्तमपि न कर्तव्यमिति पूर्वपक्षिणामाशयः।

परन्तु तन्न समीचीनम्। कथमिति चेदत्रेदं वक्तव्यं यत् युगपदपच्छेदो यद्यपि अभिन्नकाले संघटते तथापि तत्तत्पुरुषकर्तृका क्रिया तु भिन्ना इत्यत्र नास्ति कश्चित् संशयः। तेन भिन्नभिन्नकर्तृकत्वं क्रिययोः सिद्धम्। एवं भिन्नकर्तृकत्वे सिद्धे एकैककर्तृकक्रियाजन्यापच्छेदस्य निमित्तं प्रायश्चित्तमवश्यकर्तव्यं यौगपद्ये इति सिद्धान्तः।

नन्वेवं यौगपद्ये प्रायश्चित्तम् अनिवार्यम् इति सिद्धम्। परन्तु यदि उद्गातृप्रतिहर्तोश्च युगपदपच्छेदो जायते तत्र किं कर्तव्यमिति चेदत्रेदं वक्तव्यं यत् उद्गात्रपच्छेदे आरब्धं यज्ञम् अदक्षिणाकं समाप्य पुनर्यागो विधेयः, पुनर्यागे पूर्वं या नियता द्वादशशतं गवां दक्षिणा सा यजमानेन दातव्येति प्रायश्चित्तम्। प्रतिहर्तुरपच्छेदे तु सर्ववेदसं नाम सर्वस्वं यजमानेन दक्षिणात्वेन देयमिति। अत्र संशयो जायते यत् किमनयोः समुच्चय उत विकल्पो विधेय इति।

प्रसङ्गेऽस्मिन् पूर्वपक्षिणामयमाशयो यत् प्रायश्चित्तद्वयोर्निमित्तसद्भावात् वैगुण्यपरिहाराय समुच्चय एव विधेयः। न चात्र अदक्षिणत्वसर्वस्वदक्षिणत्वरूपयोः मिथो विरुद्धयोरनुष्ठानासम्भवात् समुच्चयो दुःशक इति वाच्यम्, आद्यं प्रयोगम् अदक्षिणाकं समाप्य द्वितीये सर्वस्वदक्षिणेति एकस्यैव कर्मणः प्रयोगभेदेन तत्सिद्धेः।

परन्तु समुच्चयो न रम्यः। कथमिति चेदत्रेदं वक्तव्यं यत् पुनः प्रयोगे यत्पूर्वस्मिन् दास्यन् स्यात् तद् दद्यात् इति द्वादशशतदक्षिणायाः निर्देशात् सर्वस्वदक्षिणाद्द्वादशशतदक्षिणयोर्विप्रतिषेधेन समुच्चयो दुःशक एव। न च प्रयोगभेदेन समुच्चयः उपपन्न इति वाच्यम्, तथात्वे उद्गात्रपच्छेदे आरब्धस्य प्रयोगस्य अदक्षिणाकत्वात् पुनः प्रयोगस्य च द्वादशशतदक्षिणाकत्वात् प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणाया निरवकाशापत्तिप्रसङ्गात्।

तदुक्तं जैमिनिना तत्र विप्रतिषेधात् विकल्पः स्यादि[2]ति। एवमस्मिन् स्थले उभयोर्मध्ये यथेच्छम् एकमनुष्ठेयमिति सिद्धम्।

परन्तु यत्र आदौ अदक्षिणाकयज्ञसमाप्तिपुनःप्रयोगप्रायश्चित्तकः उद्गात्रपेच्छेदस्तदनु सर्वस्वदक्षिणाकप्रतिहर्त्रपेच्छेदो जायते तत्र किं कर्तव्यमिति शङ्कायामादौ पक्षद्वयमुदीरितम्। तत्राद्यपक्षनये उभावेव अपच्छेदौ तुल्यबलौ अन्योऽन्यनैरपेक्ष्यात्। तस्मात् पूर्ववदत्रापि विकल्प एव युक्त इति।

किञ्च द्वितीयपक्षमते असञ्जातविरोधित्वेन प्राबल्यात् उपक्रमन्यायानुसारेण पूर्वमेवोत्तरस्य बाधकमिति स्वीकार्यम्। एवमत्र किं समाधानमिति जिज्ञासायां सूत्रितं जैमिनिना - पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्[3] इति। अपच्छेदनिमित्तद्वयोः पौर्वापर्ये पूर्वनैमित्तिकं दुर्बलं स्यात् प्रकृतिवत्। प्रकृतिवत् इति अत्र दृष्टान्तम्। प्रकृतौ इव इति विग्रहे प्रकृतिशब्दात् तेन तुल्यं क्रिया चेद्वति[4]रिति सूत्रेण वतिप्रत्यये प्रकृतिवत् इति भवति। तेन प्रकृतौ इत्यस्य अपच्छेदविषये इत्यर्थः। तथाहि ज्योतिष्टोमयागे सामान्यरूपेण या द्वादशशतगोदानरूपा दक्षिणा अस्ति सा प्रतिहर्त्रादीनामपच्छेदे सति सर्वस्वदक्षिणादिना यथा बाध्यते परत्वात् तद्वद् इहापि द्वयोरपच्छेदे परनैमित्तिकं पूर्वं बाधते इति।

किञ्च प्रकृतिवत् इति शब्दस्य अन्यथापि अर्थवर्णनं शक्यम्। तद्यथा प्रकृतेरिव इति षष्ठ्यन्ताद् प्रकृतिशब्दात् वतिप्रत्ययेनापि प्रकृतिवत् इति भवति। अत्र प्रकृतिशब्दः प्रकृतियागवाची। अस्येदमेव तात्पर्यम् यत् प्राकृतं कुशविषयकादिज्ञानं यथा परत्वात् वैकृतेन शरविषयकादिज्ञानेन बाध्यते तद्वद् इहापि परस्य

2 Mīmā.sū., - 6/5/51
3 Mīmā.sū., - 6/5/54
4 Pā.sū., - 5/1/115

प्राबल्यमभ्युपगम्यमिति।

एवं पूर्वपरयोर्विरोधे समुपस्थिते परेण पूर्वस्य बाध इति खलु अस्य सूत्रस्य निर्गलितार्थः। ननु तच्च कथमिति चेदत्रेदं वक्तव्यं यत् एकस्यैव अनुष्ठानस्य वैगुण्यपरिहाराय उभयमेव नैमित्तिकम् इह प्रवर्तते। तेन उभयोरेकक्रियाङ्गत्वं सिद्ध्यति एव। परन्तु प्रोक्तवाक्यद्वयात् पूर्वनैमित्तिकविषयकं तथा परनैमित्तिकविषयकं यत् ज्ञानं जायते तदुभयमेव परस्परनिरपेक्षमेव। पूर्वज्ञानं यदोत्पद्यते तदा परज्ञानमनुत्पन्नं तथा असदेव। तस्मात् समकालिकत्वाभावात् पूर्वं परं न बाधते। एवं परनैमित्तिकविषयकज्ञानं तु पूर्वनिरपेक्षं तथा प्रत्यक्ष-वाक्यबोधितम्। तस्मात् तदुत्पत्तिस्तु ध्रुवम्। परन्तु तत् पूर्वज्ञानविरोधित्वात् पूर्वज्ञानं प्रबाध्य एव उत्पद्यते। तस्मादेव पूर्वज्ञानम् आदौ उत्पन्नं सत् यद्यपि लब्धास्पदं तथापि तत् परज्ञानेन एव बाध्यते। तदुक्तं भाष्ये "पौर्वापर्ये पूर्वदौर्बल्यं स्यात्। कुतः ? आख्यातेन हि योऽर्थः कर्तव्य इत्युच्यते, तत्रैतदनुबद्धं, यथा शक्यते तथेति। तत् पूर्वविज्ञानबाधेन शक्यते, नान्यथा। तेन पूर्वविज्ञानं बाधित्वेदं कर्तव्यमिति भवति शब्दार्थः। ननु पूर्वविज्ञानम् इदमुत्पद्यते, यदन्यद्विरोधकं विज्ञानं भविष्यति, तन्मिथ्येति। अभूतं हि तन्न शक्यमाश्रयि-तुमिदं नाम तदिति। न चाप्रतिषिद्धे तस्मिन्न पूर्वविज्ञानं सम्भवति। तस्मादप्रतिषिद्धं भविष्यति। यदा तु तद् भवति, तदा पूर्वविज्ञानं बाधमानमेव उत्पद्यते। तदिदानीं बाधितुं न शक्नोति उत्तरं बाधितुमिति। प्रकृतिवत्। यद्धि प्राकृतं वैकृतेन बाध्यते, तत्रापि एतदेव कारणम्"[5]इति। तस्मात् परस्य पूर्वप्राबल्ये बीजं खलु पूर्वबा-धकतयैवोत्पन्नत्वम्। तदुक्तं तन्त्रवार्तिके –"पूर्वं परमजातत्वाद् अबाधित्वैव जायते। परस्यानन्यथोत्पादाद् न त्वबाधेन संभवः"[6] इति। एवं बाधकान्तराभावात् परज्ञानं प्रबलमेव।

ननूद्गात्रपच्छेदो यदि उभयोर्मध्ये उत्तरकालीनः स्यात् तत्र किं कर्तव्यमिति शङ्कायां सूत्रितं जैमिनिना "यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्यात् यथेतरस्मिन्"[7] इति। वस्तुतः पौर्वापर्ये जघन्यनिमित्तं प्रा-यश्चित्तमनुष्ठेयमिति पूर्वमेवोक्तम्। तत्रापि उद्गातुरपच्छेदः पश्चाज्जायते चेत् तस्यापच्छेदस्य प्राबल्यात् तन्निमित्तं प्रायश्चित्तं विधेयम्। तस्य तु प्रथमप्रयोगम् अदक्षिणाकं समाप्य द्वितीयप्रयोगे पूर्वं यत् दित्सितं तद्देयम् इति प्रायश्चित्तम्। तत्र तु पूर्वं गवां द्वादशाधिकं शतं ज्योतिष्टोमे सामान्यतया दक्षिणेति प्रोक्तम्। प्रतिहर्त्रपच्छेदेन च सर्वस्वं दित्सितम्।

इदानीमत्र जायते संशयः किं पुनर्यज्ञे द्वादशशतं देयमुत सर्वस्वमिति। विषयेऽस्मिन् तत्र तु तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात् इत्युक्त्या तु ज्योतिष्टोमयागे यत् देयत्वेन प्रोक्तं तदेव प्रतीयते इत्यतः द्वादशशतमेव देयमिति पूर्वपक्षिणामाशयः। परन्तु तन्न युक्तम्। कथमिति चेदत्रेदं वक्तव्यं यत् पूर्वस्मिन् दास्यन् स्यादित्यत्र पूर्वपदं अव्यवहितपूर्वप्रयोगपरकम्। तेन प्रयोगयोर्मध्ये पुनर्यागे सर्वस्वदक्षिणाकप्रयोग एव अव्यवहितपूर्वप्रयोगः, द्वादशशतदक्षिणाकप्रयोगस्तु व्यवहितः। तस्माद् पुनः प्रयोगे सर्वस्वमेव देयमिति सिद्धान्तः। न च सर्वस्वमपि अदाक्षिण्येन बाधितमिति वाच्यम्, बाधकस्य दक्षिणान्तरस्याकथितत्वात्। तस्मात् न हि उद्गात्रपच्छेदेन पूर्वदक्षिणा बाध्यते किन्तु पूर्वदित्सिता दक्षिणा तत उत्कृष्य परवर्तिनि प्रयोगे निक्षिप्यते। तत्फलतया पश्चाज्जाते उद्गात्रपच्छेदनिमित्ते अपि पुनः पूर्वकालीनप्रतिहर्त्रपच्छेदप्रयुक्तं सर्वस्वमेव देयम्। एवं निरपेक्षयोः पौर्वापर्ये पूर्वं दुबलमुत्तरं च प्रबलमिति स्थितम्।

## अपच्छेदन्यायोदाहरणम्

नन्वस्य किमुदाहरणमिति चेदत्रेदं वक्तव्यं यत् काम्यनैमित्तिकाभ्यां नित्यस्य, वैकृतेन च प्राकृतस्य बाधोऽपच्छेदन्यायेनैव भवति। तदुक्तं टुप्टीकायाम् - "नित्यनैमित्तिकयोः, नित्यकाम्ययोः, प्राकृतवैकृतयोश्च

5 Jai.mi.bhā., - 6/5/55(Bahalgarh: Ram Lal Kapoor Trust, 1986) p.1897-1898.

6 The Tantravārtikam - 3/3/14 (Benares: Braj B. Das & Co, 1882) p.878.

7 Mīmā.sū., - 6/5/55

पौर्वापर्यनैमित्तिकन्यायेन बाधः"[8] इति।

तत्र नैमित्तिकेन नित्यस्य बाधो यथा दर्शपूर्णमासयोः सामान्येन सामिधेनीनां पाञ्चदश्यं विहितम्। तत्रैव 'सप्तदशानुब्रूयाद् वैश्यस्य'[9] इति वैश्यकर्तृकत्वे निमित्ते तत्साप्तदश्यं विहितम्। नैमित्तिकमिदं साप्तदश्यं नित्यं पाञ्चदश्यं बाधते परत्वात् प्रस्तुतन्यायानुसारेण।

काम्येन नित्यस्य बाधो यथा तत्रैव 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य'[10] इति प्रतिष्ठारूपफलसाधनतया विहितेन सामिधेनीनामेकविंशतित्वेन नित्यस्य तत्पाञ्चदश्यस्य बाधः। अनेन च काम्येन नैमित्तिकस्य साप्तदश्यस्यापि बाधो भवति। तदपीह उदाहरणम्।

वैकृतेन प्राकृतस्य बाधो यथा – विकृतिविशेषे शरमयं बर्हिः इति विहितेन शरेण प्रकृतितः प्राप्तस्य कुशस्य बाधः। एवम् औपदेशिकेनातिदेशिकस्य बाधःप्रस्तुतन्यायेनैव भवति।

## बाध्यबाधकभावविचारः

ननु परेण पूर्वस्य यो बाधो जायते स च बाधः कथंकार इति चेद् अत्रेदं वक्तव्यं यत् प्रस्तुते स्थले परेण पूर्वस्य बाधे परं यत् निमित्तमुत्पन्नं तत् नैमित्तिकमनुष्ठापयति अपरतः पूर्वं निमित्तं यद्यपि उत्पन्नं तथापि तत् न अनुष्ठापयति स्वकीयम् नैमित्तिकम् इति प्रयोगदिशा स्वकीयनैमित्तिकाननुष्ठापकत्वरूपो बाधोऽत्र स्वीकृतः।

किञ्चात्र ज्ञानदिशापि बाधो वर्तते। स च बाधः भ्रमत्वज्ञानरूपः। तच्च कथमिति चेदत्रेदं वक्तव्यं यत् उद्गात्रपच्छेदवति प्रयोगे पूर्वं ज्ञानं जायते दक्षिणा न दातव्या पुनः प्रयोगश्च परन्तु परवर्तिनि प्रतिहर्त्रपच्छेदवति प्रयोगे ज्ञानं जायते सर्वस्वदक्षिणा दातव्या इति। एवं परेण पूर्वस्य बाधे परज्ञानं प्रमा इति यथा निश्चीयते तथैव पूर्वज्ञानं भ्रम इत्यपि। तस्मादत्र तन्निमित्तककर्तव्यताज्ञानयोरेकस्य अपरेण भ्रमत्वनिश्चयरूपो बाधो जायते।

ननु यदा परज्ञानमुत्पद्यते तदा पूर्वज्ञानं भवति नष्टम्। तर्हि नष्टस्य कथं बाधः। न हि मृतस्य सर्पस्य पुनस्ताडनेन नाशो भवतीति चेदत्रेदं वक्तव्यं यत् यद्यपि ज्ञानं क्षणस्थायि, क्षणान्तरं तद् विनष्टं भवति तथापि स्मृत्यारूढतया तत् तिष्ठत्येव। वस्तुतः शास्त्रार्थज्ञानं हि कर्मण प्रयोगावसरे एव उपयुज्यते।

ननु शास्त्रेणैव पूर्वज्ञानमुत्पन्नम् तस्य भ्रमत्वं कथमिति चेदत्रेदं वक्तव्यं यत् यद्युद्गाताऽपच्छिद्येताऽदक्षिणं तं यज्ञं संस्थाप्य तेन पुनर्यजेत इत्यत्र यत्र केवलमुद्गाता अपच्छिन्नस्तत्र अदक्षिणाकं यागं समाप्य पुनर्याग अनुष्ठेय इत्येव शाब्दबोधो जायते। परन्तु प्रकृतस्थलं तु भिन्नम्। अत्र केवलमुद्गात्रपच्छेदो न केवलं जायते तदुत्तरं प्रतिहर्त्रपच्छेदोऽपि जायते। शास्त्रं केवलम् उद्गात्रपच्छेदवति प्रयोगे प्रायश्चित्तमुपदिशति न तु उद्गातृप्रतिहर्त्रुभयापच्छेदवति प्रयोगे। तस्मात् आदौ उद्गात्रपच्छेददर्शनात् झटिति अदक्षिणाकं यागं समाप्य पुनर्यागः अनुष्ठेय इति या बुद्धिर्जायते सा तु अस्मदीया एव। तदुत्तरं प्रतिहर्त्रपच्छेददर्शनात् सर्वस्वदक्षिणा दातव्या इति या बुद्धिर्जायते साऽपि अस्मदीया एव। एवमस्मदीया या आदिमा अदक्षिणाकं यागं समाप्य पुनर्यागः अनुष्ठेय इत्याकारा बुद्धिर्जायते सा परया सर्वस्वदक्षिणा दातव्या इति बुद्ध्या बाध्यते। तस्माद् नास्ति अत्र शास्त्रस्य अप्रामाण्यम् इति। तदुक्तं भाट्टदीपिकायाम् खण्डदेवाचार्येण – "तथा च अमयमत्र क्रमः। परनिमित्तोपनिपाते तन्नैमित्तिकवाक्यार्थज्ञानं पूर्वविज्ञानस्मरणं च, ततः परज्ञानस्य तेन सह विरोधज्ञानं, ततः तेन अपेक्षाबुद्ध्यात्मकेन विनश्यदवस्थेन चतुर्थक्षणे पूर्वविज्ञानस्य भ्रान्तित्वकल्पना, विरोधज्ञानदशायां तदुत्तरं वा परनैमित्तिकवाक्यार्थस्मरणात् सा इति न विरोधः। अतः सिद्धं परेण पूर्वस्य बाध"[11] इति।

---

8 Ṭup, - 6/5/5 (Benares: The Proprietors Messrs. Braj B. Das & Co, 1904) p.144.

9 Kṛ.tait.saṁ - 2/5/10 (Aundh (Near Mumbai): Swadhyaya Mandala, 1941) p.112.

10 ibid.

11 Bhā.dī., - 6/5/54 (Madras: University of Madras, 1957) p.836

## अपच्छेदन्यायप्रवृत्तिनिमित्तम्

किञ्च पूर्वोत्तरविरोधग्रस्तेषु स्थलेषु एव अयं न्यायः प्रवर्तते। यत्र विरोधो न वर्तते तत्रायं न प्रसरेत्। तदुदाहरणं यथा अग्निषोमीयपशुयागः। तत्र प्राकृतयागे पशुत्वेन अजो निर्णीतो मन्त्रवर्णेन। वायव्यं श्वेतमालभेतभूतिकामः[12] इति विकृतपशुयागे श्वेतवर्णवत्त्वं निर्दिश्यते। स च श्वेतः अजोपि भवितुमर्हति अजातिरिक्तोऽन्यपशुरपि भवितमुर्हति। तर्हि कस्य ग्रहणं भवेत् इति शङ्कायामुदीरितं जैमिनिना - नैमित्तिके तु कार्यत्वात् प्रकृतेः स्यात्तदापत्तेः[13] इति। अस्येदमेव तात्पर्यं प्रकृतियागे पशुत्वेन यत्किञ्चिद्वर्णीयः अजो निर्दिष्टः। स च विकृतियागे अतिदेशात् लभ्यते। तत्र विशिष्य केवलं श्वेतवर्णस्य निर्देशो वर्तते। तस्मात् अपच्छेदन्यायेन केवलं वर्णस्यैव बाधो भवेत् विरोधात्। न तु अजत्वजातेः बाधः स्यात् अविरोधात्। तदुक्तं भाष्ये "नैमित्तिके एतस्मिन् श्वेतगुणनिमित्तके द्रव्ये श्वेतशब्दे सति गुणमात्रं विक्रियते। न ह्यत्र जातिविशिष्टं द्रव्यं प्रतीयते। यदेष आलम्भसाधनभूतम्, तदेव परिच्छेत्तव्यमिति एतद्वाक्यादवगम्यते। यच्चास्य चोदकप्राप्तं द्रव्यं साधनमविरुद्ध्यमानं श्रुत्या प्राप्नोति, तदयं श्वेतशब्दः परिच्छेत्स्यति। ननु अजात् अन्यान्यपि द्रव्याणि परिच्छेत्तुमयं शक्नोति। न ब्रूमो न शक्नोतीति, न तेन परिच्छिन्नेन प्रयोजनमस्ति। तस्मात् प्रत्यक्षोपि श्वेतशब्दः छागमेव परिच्छिन्द्यात् नान्यं पशुमि"ति[14]।

ननु किमयमपच्छेदन्यायः पूर्वपरविरोधग्रस्तेषु सर्वेषु स्थलेषु प्रवर्तते इति चेदत्रेदं वक्तव्यं यत् नायं सर्वत्र प्रवर्तते। अङ्गगुणविरोधन्यायस्थले अपच्छेदन्यायो न प्रवर्तते। तथाहि सूत्रितं जैमिनिना अङ्गगुणविरोधे तादर्थ्यादि[15]ति। अङ्गगुणेन प्रधानगुणविरोधे प्रधानगुणानुग्रह एव न्याय्यः, अङ्गानां प्रधानार्थत्वादिति। तस्मात् यत्र प्रधानम् आदौ वर्तते, अङ्गं चान्ते वर्तते तत्र प्रधानं सदपि पूर्वं परम् अङ्गं बाधते। एवं यत्र अङ्गगुणविरोधन्यायः प्रवर्तते तत्र स्थले अपच्छेदन्यायः न प्रवर्तते।

किञ्च यत्र पूर्वपरयोः सापेक्ष्यत्वं तथा एकवाक्यता च वर्तते तत्रापि अपच्छेदन्यायो न प्रवर्तते। तत्र तु उपक्रमन्यायः प्रवर्तते। तत्र पौर्वापर्ये न पूर्वदौबल्यं किन्तु परदौर्बल्यमेव। प्रसङ्गेस्मिन् वेदो वा प्रायदर्शनादि[16]ति मीमांसासूत्रं प्रमाणपदवीमध्यास्ते। तद्यथा ज्योतिष्टोमे "प्रजापतिर्वा इदमग्र आसीत्। -- स तपोऽतप्यत। -- तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्त। अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेदः"[17] इत्युपक्रम्य उपसंहारे -- "उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना"[18] इत्याम्नातम्। अनयोरुपक्रमस्थं वाक्यं अग्न्यादिदेवागतत्वरूपस्तुत्यर्थकत्वाद् अर्थवादाभिधम् उपसंहारस्थं चोच्चैस्त्वरूपाप्राप्तार्थप्रापकत्वात् विधिरूपम्। तत्र उपक्रमन्यायेन उच्चैर्ऋचा क्रियते इत्यादिना वाक्येन विधीयमानस्य उच्चैस्त्वादेः उद्देश्यसमर्पकेण ऋगादिपदेन त्रयो वेदा असृज्यन्त इत्याद्युपक्रमस्थार्थवादवशेन लक्षणया गुणीभूतस्य ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रमात्रस्य उद्देश्यत्वं प्रतिपाद्यते।

तच्च कथमिति चेदत्रेदं वक्तव्यं यत् विधिवाक्यश्रवणात् पूर्वमेव उपक्रमस्थार्थवादस्य असञ्जातविरोधित्वेन निर्णीतत्वात् तद्दशायामेव तन्निष्ठवेदशब्दः स्वार्थे निश्चितः। अपरतः उपसंहारस्थो विधिस्तु उपक्रमापेक्षया सञ्जातविरोधी। विधेरर्थवादापेक्षया यद्यपि प्राधान्यं तथापि सञ्जातविरोधित्वेन विधिरिह अमुख्यः। अर्थवादस्तु विध्यपेक्षया गुणभूतोऽपि असञ्जातविरोधित्वेन मुख्यः। मुख्यापेक्षया प्रधानस्य

---

12 Kr̥.tait.saṁ., - 2/1/1 (Aundh (Near Mumbai): SwadhyayaMandala, 1941) p.65.

13 Mīmā.sū.,-10/02/68

14 Mīmā.dar., - 10/02/68, (Calcutta: 1900) p.405.

15 Mīmā.sū., 12/2/27

16 Mīmā.sū.,- 3/3/2

17 Śata.br., -11.5.8.3 (Bombay: Gaṅgāviṣṇu Śrīkṛṣṇadāsa, 1940) p.167

18 ibid.

बलीयस्त्वं तदोपपद्यते यदा प्रधानं लब्धात्मकं स्यात्। परन्तु इह विधेरर्थवादाननुगुणार्थकत्वे एकवाक्यता-विरहात् लब्धात्मकत्वाभावात् बलीयस्त्वमेव नोपपद्यते। तस्मादृगादिपदानां वेदपरत्वं लक्षणया अभ्युपेत्य अर्थवादैकवाक्यतापन्नः स्यात् विधिरिति असञ्जातविरोधित्वेन उपसंहारापेक्षया उपक्रमस्य प्राबल्यं सुस्थिरम्। एवम् अश्वदाननिमित्तकेष्टौ अपि उपक्रमन्यायः प्रवर्तते। तत्रापि उपक्रमानुसारेण उपसंहारस्थविधिगतः प्रतिगृह्णीयात् इति शब्दः प्रयोजकव्यापारबोधकत्वेन नीयते। तेन प्रतिगृह्णीयात् इत्यस्य प्रतिग्राहयेत् इत्यर्थः सम्पद्यते। तस्मात् नेयमिष्टिः प्रतिग्रहीतुः किन्तु दातुरेव इति सङ्गच्छते।

## उपक्रमोपसंहारयोर्बलाबलत्वविचारः

परन्तु अत्र प्रत्यवतिष्ठन्ते विजयीन्द्रतीर्थव्यासतीर्थादयः द्वैतिनः मीमांसकाः। ते प्रस्तुतमपच्छेदन्यायं द्वारीकृत्यैव उपक्रमोपसंहारयोरुपसंहारस्य प्राबल्यं प्रतिपादयन्ति। तदुक्तं तर्कताण्डवे – "अनुव्याख्याने च उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम्।

श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णयात्॥[19] इत्युपक्रमादीनां परबलीयस्त्वमुक्तम्। न्यायविवरणे चोपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकर्तव्यं व्याख्यानस्य पश्चात्तनत्वनियमादित्युपसंहारस्योपक्रमात् प्राबल्ये हेतुरुक्तः। टीकायामपि तदनुरोधेनोपक्रमादुपसंहारो बलीयान् व्याख्यानरूपत्वादित्युक्तम्"[20] इति।

अस्येदमेव तात्पर्यं यत् कस्यचित् वाक्यस्य आद्यभागात् कश्चिदर्थो यदि बुद्धिस्थः स्यात् तदा तद्विरोधिनः अन्त्यभागस्य सार्थक्यप्रतिपादनाय अन्त्यभागः आद्यभागस्य व्याख्यानमिति कल्प्यते। एवं लोके अपि दृश्यते यत् गामानाय, बलीवर्दमानय इत्यादिषु स्थलेषु बलीवर्दमानय इति खलु व्याख्यानं भवति आद्यस्य गामानय इति वाक्यस्य। एवमुपसंहारस्य उपक्रमव्याख्यानरूपत्वात् तदपेक्षया प्राबल्यं भवति सिद्धमिति ते आमनन्ति।

परन्तु तन्मतं न सहन्ते अप्पयदीक्षितादयः उपक्रमप्राबल्यवादिनः। तन्मते उपसंहारस्य उपक्रमव्याख्यानरूपत्वं न सार्वत्रिकम्। सन्ति नैकानि प्रसिद्धस्थलानि यत्र उपक्रमस्यापि उपसंहारव्याख्यानरूपत्वं दृग्गोचरीभवति। तेष्वन्यतमं वृद्धिरादैच्[21] इति सूत्रम्। तथाहि अनन्तरोक्ते सिचि वृद्धिः परस्मैपदेषु[22] इति सूत्रे विद्यमानस्य वृद्धिपदस्य व्याख्यानं भवति पूर्वोक्तस्य वृद्धिरादैच् इति सूत्रस्य आदैच् इति पदम्। तदुक्तमप्पयदीक्षितेन तदीये उपक्रमपराक्रमे "व्याकरणे च वृद्धिरादैजित्यादेः सिचि वृद्धिरित्यादिचरमश्रुतसूत्रस्थवृद्ध्यादिपदव्याख्यानरूपत्वदर्शनात्। तस्मात्परस्परविरोधस्थले परस्परव्याख्यानरूपत्वकल्पनमप्रमाणमिति नोपसंहारप्राबल्ये व्याख्यानरूपत्वं कारणमि"ति[23]।

नन्वेवं उपक्रमोपसंहारयोः कस्य कुत्र प्राबल्यं कस्य वा कुत्र दौर्बल्यमिति चेदत्रेदं वक्तव्यं यत् यत्र पूर्वपरयोर्विरोधः, एकवाक्यता सापेक्ष्यत्वं च वर्तते तत्र उपक्रमप्राबल्यं। यत्र पुनः उभयोर्विरोधः परन्तु नैरपेक्ष्यं वर्तते तत्र उपसहारप्राबल्यम्। तदुक्तं तन्त्रवार्तिके भट्टकुमारिलेन - "पौर्वापर्यबलीयस्त्वं यत्र नाम प्रतीयते। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥ ये हि भिन्नवाक्यगताः परस्परनिरपेक्षाः विरोधिनोऽर्थाः श्रूयन्ते तेषां पूर्वस्य उत्तरानुपमर्देनैव लब्धात्मकत्वात् उत्तरस्य पूर्वोपमर्देन विना आत्मलाभानुपपत्तेः

19 अनुव्याख्यानम् ३/४/१८१

20 Tar.tāṇ., balābalavādaḥ, (Bangalore: Dvaita Vedanta Studies and Research Foundation. 2003) p.322

21 Pā.sū., 1/1/1

22 Pā.sū., 7/2/1

23 Upa.parā., (Vārāṇasī: Kāsīhindūviśvavidyālaya,1973) p.18

पौर्वापर्यबलीयस्त्वन्यायो भवति। यत्र तु एकवाक्यता परस्परापेक्षाणां श्रवणं, न तत्र एतद् भवति”[24] इति। तस्मादुपक्रमन्यायस्य वाक्यार्थतात्पर्यनिर्णायकत्वात् पूर्वोत्तरयोः परस्परसापेक्षत्वं यथापेक्ष्यते तथैव एकवाक्यता अपि, अपरतः अपच्छेदन्यायस्य अनुष्ठानकालीनसंशयनिवारकत्वात् पूर्वोत्तरयोः परस्परनैरपेक्ष्यं यथा अपेक्ष्यते तथैव एकवाक्यताविरहोऽपि इति विविक्तविषयत्वात् भिन्नमुभयोर्प्रवृत्तिस्थलम् इति।

## अपच्छेदन्यायस्य शास्त्रान्तरेषु सञ्चारः

किञ्च सनातनधर्मप्रदीपग्रन्थे विवाहप्रकाशे ऋतुमतीविवाहस्य शास्त्रीयत्वप्रतिपादनावसरे अस्य न्यायस्य प्रयोगो दृश्यते। वस्तुतः मन्त्रलिङ्गसम्मतः ऋतुमतीविवाहः शास्त्रसम्मत उत कन्याविवाहः इति संशये कतरः पक्षः ग्राह्यः। तत्र पूर्वपक्षिणामयमाशयो यत् स्मार्तवचनं विधिरूपम्। अपरतः मन्त्राणाम् विध्यपेक्षितत्वात् ते विध्युत्तरकालमेव प्रवर्तन्ते। तस्मात् मन्त्रलिङ्गस्य विध्यधीनत्वात् विधेश्च असंजातविरोधित्वात् उपक्रमन्यायानुसारेण विधेरेव प्राबल्यम् अङ्गीकार्यम्। तेन ऋतुमतीविवाहो न शास्त्रसम्मतः।

परन्तु प्रोक्तं मतं न रम्यं कथमिति चेदत्रेदं वक्तव्यं यत् विधिपदेन तु श्रौतविधिरेव विवक्ष्यते न स्मार्तविधिः। किञ्च विधिमन्त्रौ उभावेव स्वार्थप्रकाशने इतरं नापेक्षेते इति परस्परापेक्षित्वमपि उभयोर्न वर्तते। एवं परस्परनैरपेक्ष्यात् तत्र उपक्रमन्यायो न प्रवर्तते, किन्तु अपच्छेदन्यायः एव। तस्मात् परं प्रवृत्तस्य मन्त्रलिङ्गस्यैव प्राबल्यात् ऋतुमतीविवाहः शास्त्रीय इति सिद्धान्तिनामाशयः। तदुक्तं सनातनधर्मप्रदीपे विवाहप्रकाशाध्याये – “मन्त्राणां परास्परापेक्षत्वं किं प्रमाणसिद्धम्, उताहो स्वकपोलकल्पितम्? तत्र न तावत् प्रथमः कल्पः सम्भवति, मन्त्राणां पदैकवाक्यतया व वाक्यैकवाक्यतया विध्यर्थबोधकत्वेन प्रामाण्याभावस्य मन्त्राधिकरणे खण्डदेवैरुपपादितत्वात्। अन्यथार्थवादाधिकारेणैव गतार्थत्वात् मन्त्राधिकरणं वितथं प्रसज्येत। न द्वितीयः, अप्रामाणिकभवदीयकल्पनाया अकिञ्चित्करत्वात्। एवञ्च विधिमन्त्रयोर्भ्रमबाधज्ञानयोरिव परस्परापेक्षत्वं नास्त्येवेति नोक्ताधिकरणप्रसक्तिः। किन्तु पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् इति वचनानुसारेण अपच्छेदाधिकरणन्यायेनोत्तरकालप्रवृत्तिकानां मन्त्राणामेव प्राबल्यं स्यादित्युपक्रमोपसंहारन्यायसंचारादिकं गाढाज्ञानविजृम्भितमेव”[25] इति।

एवं वेदान्तशास्त्रे अपि अस्य न्यायस्योपयोगो दरीदृश्यते। तत्र आगमेन प्रत्यक्षस्य बाधः प्रस्तुतन्यायानुसारेण भवति इति वाचस्पतिमिश्रस्याभिप्रायः। तदुक्तं तेन भामत्यां “ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुः, न बाधकत्वे, रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात्, तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः। दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षितत्वम्। तथाच पारमर्षं सूत्रं - पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्”[26] इति। तदाशयं परिस्कुर्वन्नाह परिमलकारः - “ननु प्रत्यक्षज्ञानप्रामाण्यं ज्ञानसमानवित्तिवेद्यतया प्रकाशमाने विशिष्य नियमेन प्रतीतं नाद्वैतश्रुत्या बाधनमर्हतीत्याशङ्क्य विशिष्य नियमेन प्रतीतस्यापि पूर्वस्य परे टीकायामपच्छेदन्यायोदाहरणं कृतम्”[27] इति। एवमद्वैतसिद्धावपि तदुल्लिखितम्। तदुक्तं तत्र “किञ्चापच्छेदन्यायेनाप्यागमस्य प्राबल्यम्। यथा हि पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् इत्यधिकरणे उद्गात्रपच्छेदनिमित्तकादक्षिणयागेन परेण प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागस्य पूर्वसिद्धनिमित्तस्य बाध इति स्थितं, तथेहापि उदीच्यागमेन पूर्वस्य प्रत्यक्षस्य बाध”[28] इति।

---

24 Tantra., 3/3/2 (Benares: Braj B. Das & Co, 1882) p.819

25 Sanātanadharmapradīpe pramāṇaprakāśacāturvarṇyaprakāśau, (Calcutta:Vaṇik press,1926) p.292

26 Bhā.Br., - 1/1/1(Bombay: Nirnaya sagar Press, 1917) p.10.

27 Kalpa.Br., - 1/1/1(Bombay: Nirnaya sagar Press, 1917) p.10.

28 Advai., ch-1, (Varanasi:1984) p.148.

तस्मादस्येदमेव तात्पर्यं यत् जगतः सत्त्वं पूर्वं प्रमाणज्येष्ठेन प्रत्यक्षेण सिद्धं यद्यपि भवति परन्तु तद् उत्तरवर्तिन्या जगन्मिथ्यात्वख्यापकश्रुत्या अपच्छेदन्यायानुसारेण बाधितं भवति। तदुक्तं के.टि. पाण्डुरङ्गि-महोदयेन तदीये "Utilization of Mīmāmsā nyāya in Vedānta" इति शीर्षके प्रबन्धे "Apacchedanyāya applies to such instances where in the earlier and later position is not fixed. The Advaita utilizes this maxim to establish that the perception of the reality of the world is set aside by the MithyātvaŚruti, since perception takes place earlier than the cognition provided by Śruti. The later sets aside the earlier."[29] इति।

किञ्च "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"[30] इति सगुणत्वख्यापकश्रुत्यपेक्षया "असद्वा इदमग्र आसीत्"[31] इति निर्गुणत्वख्यापकश्रुतेः प्राबल्यम् अपच्छेदन्यायेनैव सिध्यतीति। तथाहि उक्तम् अद्वैतसिद्धौ "ननु निर्गुणवाक्यं सगुणवाक्यं बाधते, न तु सगुणवाक्यं तदिति किमत्र नियामकम्। न च निषेधकतया निर्गुणवाक्यं प्रबलम्, असद्वा इत्यादिवाक्यस्य सदेव इत्यादिवाक्यात् प्राबल्यापत्तेरिति चेन्न, अपच्छेदन्यायेन प्राबल्यस्य प्रागेवोक्ते"[32]रिति।

## उपसंहारः

परिशेषे उल्लेख्यं यत् पूर्वपरयोर्विरोधे परस्य प्राबल्यम् अभ्युपगतं स्वयं पाणिनिनापि। तथाहि सूत्रितं तेन विप्रतिषेधे परं कार्यम्[33] इति। तुल्यबलविरोधे परं कार्यं स्यादिति तदर्थः। अस्योदाहरणं यथा रामेभ्यः इति। राम-भ्यस् इत्यवस्थायां बहुवचने झल्येत्[34] तथा सुपि च[35] इत्यनयोः अन्यत्रलब्धावसरयोरिहैकत्र प्राप्तयोः प्रस्तुतसूत्रबलेन परत्वात् बहुवचने झल्येदित्यनेन एकारादेशो विधीयते। एवं पूर्वपरयोर्विरोधे परस्य प्राबल्यं तेनाप्यभ्युपगतमिति प्रतीयते।

नन्वेवं सति विप्रतिषेधे परं कार्यमिति सूत्रविषयः किम् अपच्छेदन्यायाभिन्न इति चेदत्रेदं वक्तव्यं यत् व्याकरणस्थं पौर्वापर्यम् अष्टाध्यायीसूत्रपाठक्रमाद् निर्धार्यते। परन्तु अपच्छेदन्याये यत् पौर्वापर्यम् अभिहितं तत्तु न तथा। तत्र सूत्रपाठक्रमो न विचार्यते किन्तु पौर्वापर्येण द्वयोः कार्ययोरुत्पत्तिरावश्यिकी। एवं सत्यपि पौर्वापर्ये परप्राबल्यविषयके साम्ये उभयोर्प्रवृत्तिनिमित्तस्य वैभिन्न्याद् भेदः स्फुटमेव। तस्माद् विविक्तविषयत्वात् भिन्नमुभयोर्प्रवृत्तिस्थलम्। एवमुपर्युक्तालोचनादेतदेव अवसीयते यत् निरपेक्षयोः पूर्वपरयोः विरोधग्रस्तेषु अङ्गगुणोपक्रमन्यायाविषयेषु स्थलेषु अपच्छेदन्यायः अनुष्ठानकालीनसंशयनिवारकत्वेन प्रवर्तते इति शम्।

## Abbreviation

1. Advai. - Advaitasiddhi
2. Āpa.sū. - Āpastamvaśrautasūtram

[29] Pandurangi, K.T. Purvamimamsa from an Interdisciplinary Point of View. (New Delhi: Project of History of Indian Science, Philosophy and Culture, 2006) p.417.

[30] Chā.upa., - 6/2/1(Calcutta: Vasumati Sahitya Mandira,1936) p.489.

[31] Tait.upa., - 2/7/1(Madras:Ramakrishna Math Mylapore,1921) p.82

[32] Advai., ch-2, (Varanasi:1986) p.894.

[33] Pā.sū., 1/4/2

[34] Pā.sū., 7/3/103

[35] Pā.sū., 7/3/102

3. Bhā.Br. - Bhāmatī, Brahmasūtram
4. Bhā.dī. - Bhāṭṭadīpikā
5. Chā.upa. - Chāndogyopaniṣad
6. Jai.mi.bhā. - Jaiminiya-mīmāṃsā-bhāṣyam
7. Kalpa.Br. - Kalpataruparimala, Brahmasūtram
8. Kṛ.tait.saṁ - Kṛṣṇayajurvedīya Taittirīyasaṁhitā
9. Mīmā.dar. - Mīmāṁsādarśanam
10. Mīmā.sū. - Mīmāṁsāsūtram
11. Pā.sū. - Pāṇinisūtram
12. Śata.br. - Śatapathabrāhmaṇam
13. Tait.upa. - Taittirīyopaniṣad
14. Tantra. - Tantravārtikam
15. Tar.tāṇ. - Tarkatāṇḍavam
16. Ṭup. - Ṭupṭīkā
17. Upa.parā. - Upakramaparākramah

## Bibliography


1. Advaitasiddhi. Vol-1, Swami Yogindrananda (ed.), 2nd edition, Varanasi, 1984.
2. Advaitasiddhi, Vol-2, Swami Yogindrananda (ed.), 2nd ed, Varanasi, 1986.
3. Brahmasūtraśāṅkarabhāṣyam. Anantakrishna Sastri & Vasudev Laksman Shastri (eds.), Bombay: Nirnaya sagar Press, 1917.
4. Bronner, Yigal, and Lawrence J. McCrea, First Words, Last Words: New Theories for Reading Old Texts in Sixteenth-Century India. New York: Oxford University Press, 2021.
5. Chāndogyopaniṣad, 2nd edition, Nalininath Roy (ed.), Calcutta: Vasumati Sahitya Mandira, 1936.
6. Dīkṣita, Appayya, Upakramaparākramaḥ. Subrahmaṇya śāstri & Trinātha Śarmā (eds.), Vārāṇasī: Kāsīhindūviśvavidyālaya,1973.
7. Jaiminiya-mīmāṃsā-bhāṣyam. Yudhiṣṭhira Mīmāṃsaka (ed.), Bahalgarh (Sonipat, Haryana), Ram Lal Kapoor Trust, 1986.
8. Khaṇḍadeva's Bhāṭṭa-Dīpikā: with the Prabhāvalī of Śambhu Bhaṭṭa. Part-II, S. Subrahmaṇya Śāstrī (ed.), Madras: University of Madras, 1957.

9. Kṛṣṇayajurvedīya Taittirīyasaṁhitā. Ananta Shastri (ed.), Aundh (Near Mumbai): SwadhyayaMandala,1984.

10. Mīmāṁsādarśanam. Vol-II, Jibananda Vidyasagar (ed.), Calcutta, 1900.

11. Pandurangi, K. T., Purvamimamsa from an Interdisciplinary Point of View. New Delhi: Project of History of Indian Science, Philosophy and Culture, 2006.

12. Sanātanadharmapradīpe pramāṇaprakāśacāturvarṇyaprakāśau. Ananta Krishna Shastri (ed.), Calcutta: Vaṇik press, 1926.

13. Śrīmadvājasaneyimādhyandina-Śatapatha-brāhmaṇam. Part-IV, Kalyan-Bombay: Gaṅgāviṣṇu Śrīkṝṣṇadāsa, 1940.

14. Taittirīyopaniṣad. 1st edition, Swami Sarvananda (ed.), Madras: Ramakrishna Math Mylapore,1921.

15. Tarkatāṇḍavam. Vol-2, K.T. Pāṇḍuraṅgi (ed.), Bangalore: Dvaita Vedanta Studies and Research Foundation. 2003.

16. The Srauta Sutra of Apastamba. Vol. II, Richard Garbe (ed.), 1st edition, Calcutta: Asiatic Society, 1885.

17. The Tantravārtika., 1st edition, Ḍhuṇḍhirāja Panta (ed.), Benares: Braj B. Das & Co, 1882.

18. Ṭupṭīkā. 1st edition, G. Śāstrī (ed.), Benares: The Proprietors Messrs. Braj B. Das & Co., 1904.



# लघुगुरूह्रस्वदीर्घोच्चारणकालावच्छिन्नत्वाभाववती

मलयमाइतिः, आवीरलालगङ्गोपाध्यायः च

सारांशः

ऊकालोऽज्झ्रस्वदीर्घप्लुतः(१.२.२७) इति सूत्रेण भगवता पाणिनिना वां काल इव कालेन तुल्यानाम् अचां ह्रस्वादिसंज्ञाः विहिताः। सूत्रपर्यालोचनेनैवेदं स्फुटं यत् ह्रस्व-दीर्घ-प्लुतसंज्ञाः उच्चारणकालेन अवच्छिन्नाः। परं ह्रस्वं लघु(१.४.१०), दीर्घं च(१.४.१२) इत्यादिभिः ह्रस्वादीनां लघ्वादिसंज्ञाः विहिताः। ताः लघ्वाद्यभिधाः प्रक्रियासौकर्याय आचार्येण विहिताः। उच्चारणकालपरिमितिस्तु लघ्वादिषु न गण्यते। किञ्च छन्दश्शास्त्रे तथा प्रातिशाख्येष्वपि विविधेषु ह्रस्वाद्यभिधया साकं लघुगुर्वोरुद्देशस्तु दरीदृश्यते। परन्तु तत्रापि लघुगुर्वोः मात्रापरिमितिर्न उच्चारणनिष्ठा। एवं लघुगुर्वोः ह्रस्वदीर्घयोश्च साम्यताङ्गीकारे सन्ति विप्रतिपत्तयः। किन्तु तासां विमर्शेन निष्कर्षोऽयं यत् - लघुगुरू ह्रस्वादीनाम् अभिधान्तरमात्र इति। अपि च, कालपरिमितिः मात्रापरिमितिर्वा तयोः उच्चारणेन नावच्छिन्नेति उच्चारणव्यापाराभाववानयं कालसद्भाव इत्याशयः इति दिक्॥

(मुख्यशब्दाः - ह्रस्वः, दीर्घः, लघु, गुरु, उच्चारणकालः, प्रातिशाख्यम्)

……………………

## उपोद्घातः

भगवता पाणिनिना ह्रस्व-दीर्घादिसंज्ञापरिचयवेलायां तदवच्छिन्नकालः उच्चारणनिष्ठः इति प्रत्यायितः। तदनु ह्रस्वाद्यभिधाग्रहपूर्विका लघुगुरुसंज्ञा च विहिता। तत्र ह्रस्वादिनिष्ठः कालपरिमाणः लघ्वादिनिष्ठतामपि प्राप्नोतीति विषयेऽस्ति विशयः। किञ्च ह्रस्वादिषु उच्चारणकालः किं परिमाणसमयापेक्षीति विषयेऽपि निश्चयः आवश्यकः। अतः खलु एतत्परिष्कारविस्तरात्मैवास्य पत्रस्य प्रस्तावः। न तु प्रकृते प्लुतस्य विषयत्वेन ग्रहणम्। तस्य लघुत्वासम्भवेऽपि गुरुत्वसम्भावनापि न क्वचित् परिलक्ष्यते मयूरादिगणे अस्वीकारात्, दृष्टपद्यकृतौ स्थित्यदर्शनाच्च।

## ह्रस्वदीर्घलक्षणम्

ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१.२.२७) इति सूत्रप्रामाण्यात् ह्रस्वत्वम् उकार-उच्चारण-अवच्छिन्न-काल-परिमाणत्वम्। तत्परिमाण-अवच्छिन्नः ह्रस्वः। एवम् अकार-इकार-उकार-ऋकार-ऌकाराणां तादृशकालावच्छिन्नत्वात् ह्रस्वत्वं सिध्यति।

तत्सूत्रप्रामाण्यात् एव ऊकार-उच्चारण-अवच्छिन्न-कालपरिमाणत्वम् दीर्घत्वम्। तत्परिमाण-अवच्छिन्नत्वात् आकार-ईकार-ऊकार-ॠकार-एकार-ऐकार-ओकार-औकारेषु दीर्घत्वं सिध्यति।

तथैव उ३कार-उच्चारण-अवच्छिन्न-कालपरिमाणत्वम् प्लुतत्वम्। तत्परिमाण-अवच्छिन्नत्वात् अकारादि-औकारपर्यन्तानां सर्वस्वराणां प्लुतत्वसिद्धिः। प्रस्तुतप्रसङ्गानपेक्षत्वात् न प्लुतस्य अतिविस्तरः।

## लघुगुरुलक्षणम्

तत्रभवता भगवता पाणिनिना लघुसंज्ञा विधीयते ह्रस्वं लघु (१.४.१०) इति शास्त्रेण। प्रागुक्तम् उकारोच्चारणावच्छिन्नकालपरिमाणवान् ह्रस्वो लघुसंज्ञको भवति इति तदर्थः। तेन - अकारादि-ऌकारपर्यन्तानि अक्षराणि लघुसंज्ञकानि। पुगन्तलघूपधस्य च (७.३.८६), अतो हलादेर्लघोः(७.२.७) इत्यादिसूत्रैः गुण-वृद्ध्यादिरूपप्रक्रियाकार्यसिद्ध्यर्थं ह्रस्वाक्षराणाम् अभिधान्तरमात्रं सूत्रेणानेन विधीयते। एवमेव इजादेश्च गुरुमतोऽनृच्छः (३.१.३६), गुरोश्च हलः (३.३.१०३) इत्यादिसूत्रैः गुरुमतः अक्षरस्य आम्प्रत्यय-अकारविधानादिकार्यसिद्ध्यर्थं गुरुसंज्ञा च विहिता महर्षिणा। न तु लघुगुरुसंज्ञायाम् उच्चारणकालपरिच्छिन्नत्वप्रसक्तिः।

गुरुसंज्ञाविधानार्थं महर्षिणा पाणिनिना संयोगे गुरु (१.४.११), दीर्घं च (१.४.१२) चेति सूत्रद्वयं व्यधायि। ताभ्यां संयोगपरकस्यापि पूर्वोक्तलक्षणलक्षितह्रस्वस्य तथा ऊकारोच्चारणावच्छिन्नकालपरिमाणवतो दीर्घस्य गुरुसंज्ञा परामृष्टा। संयोगो हि - स्वराक्षराव्यवहितो हल्समुदायः। तादृशहल्समुदायपरको ह्रस्वोऽपि गुरुसंज्ञां धत्ते इति परिष्कारः।

## ह्रस्वदीर्घकालविमर्शः

वाजसनेयप्रातिशाख्यसूत्रेण ह्रस्व एवं निर्दिष्टः - अमात्रस्वरो ह्रस्वः (१.५५) इति। अकारस्य मात्रा परिमाणः इति यावत्, तत्तुल्यः स्वरः ह्रस्वः इत्यर्थः। परिमाणोऽयम् उच्चारणकालनिष्ठः। तादृशकालावच्छिन्नत्वं यस्मिन् स स्वरः ह्रस्वः। ननु ह्रस्वस्य कालावच्छिन्नत्वे सत्त्वेऽपि कियत्परिमाणकः स कालः इति चेद् उच्यते - स कालः एकमात्रिकः मात्रा च (१.५६) इति निर्देशात्। मात्राकालो हि - निमेषकालावधित्वम्। तस्मात् कीर्तितं माण्डुकशिक्षायां -

अक्ष्णोर्निमेषमात्रेण यो वर्णः समुदीर्यते। स एकमात्रः ... ॥१३७॥इति।

तैत्तिरीयप्रातिशाख्ये[1], आथर्वणचतुरध्यायीप्रातिशाख्ये[2], तथा च ऋक्प्रातिशाख्येऽपि[3] - सममेव शासद् अकारोच्चारणकालसमकालिकत्वं ह्रस्वस्य विधीयते। परन्तु तत्रापि कालस्य इयत्ता न निर्दिष्टा।

दीर्घविषयेऽपि तत्र वाजसनेयप्रातिशाख्ये एवमुक्तं - द्विस्तावान् दीर्घः (१.५७) इति। प्रागुक्त-ह्रस्वस्य द्विगुणितोच्चारणकालेन सदृशः उच्चारणकालो यस्य स दीर्घः। तेन द्विमात्रिकत्वं दीर्घस्य सिद्धेऽपि समय-निर्देशाभावस्तु स्पष्ट एव।

अयमाशयः ह्रस्वदीर्घप्लुतानाम् उच्चारणकालः लयनिष्ठः। पाणिनीयादिशिक्षानुसारं त्रिधा भिन्नः लयः - द्रुत-मध्यम-विलम्बितभेदेन।[4] ह्रस्वादीनामुच्चारणकालः यथालयं समयावधिकः। तस्मात् लयनिष्ठोच्चारणकालवैभिन्न्यात् द्रुते एकनिमेषात्मकह्रस्वे सति यस्य दीर्घस्य द्विनिमेषत्वं, तस्यैव मध्ये चतुर्निमेषात्मकता शक्या ह्रस्वस्य द्विनिमेषावधिकोच्चारणकालवशात्। एवं विलम्बितेऽपि बोध्यम्। एवं प्रातिशाख्येषु एकमात्रिक-द्विमात्रिकादिनिर्देशस्तु ह्रस्वादीनां यथालयं समयानुपातगतप्रभेददर्शनाय इति स्फुटतामेति।

प्रातिशाख्यादिपरिशीलनेन विषयोऽयं स्पष्टं गम्यते यत् - ह्रस्वस्वरः अन्येषां स्वराणां मानदण्ड इव व्यवह्रियते। यतो हि वाजसनेयिप्रातिशाख्यं शास्ति - ह्रस्वस्य द्विगुणितं दीर्घे, त्रिगुणितं प्लुते, ह्रस्वस्य अर्धकालः व्यञ्जने, अर्धार्धकालः अणौ, अण्वर्धकालं च परमाणुषु इति।[5] तेन ह्रस्वस्य निमेषात्मकः कालश्चेत् दीर्घस्य निमेषद्वयात्मकः, प्लुतस्य च निमेषत्रयात्मकः कालः। एवं व्यञ्जनस्य निमेषार्धं कालः। एवं चाग्रे। निमेषात्मककालश्चात्र मध्यलयाश्रयः। द्रुतादिष्वपि यथालयनिष्ठः स कालः।

अधः द्रुत-मध्य-विलम्बितेषु त्रिषु लयेषु ह्रस्वदीर्घयोः कालपरिमितिः कथं स्यादिति व्यवस्था सूच्यते। अत्र 'क' - इति परिकल्पितपरिमाणः कालविभागसौकर्याय गृहीतः यथा आधुनिकगणितादिशास्त्रे 'x' इति वर्णो व्यवह्रियते।

1 अकारश्च, १.३२; तेन च समानकालस्वरः, १.३३

2 एकमात्रो ह्रस्वः, १.५९

3 मात्रा ह्रस्वं तावदवग्रहान्तरं द्वे दीर्घस्तिस्रः प्लुत उच्यते स्वरः। अधः स्विदासी३दुपरि स्विदासी३दर्थे प्लुतिर्भीरिव विन्दतीँ३त्रिः ॥ १.६

4 अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्। शिष्याणामुपदेशार्थे कुर्याद् वृत्तिं विलम्बिताम्॥ याज्ञवल्क्यशिक्षा, १.५४; अत्र वृत्तिशब्दो लयपर्यायवाची

5 तत्र प्रथमाध्याये क्रमश एवं पठ्यते - अमात्रस्वरो ह्रस्वः ॥५५॥ मात्रा च॥५६॥ द्विस्तावान् दीर्घः ॥५७॥ प्लुतस्त्रिः ॥५८॥ व्यञ्जनम् अर्धमात्रा ॥५९॥ तदर्धमणु ॥६०॥ परमाण्वर्धाणुमात्रा॥६१॥

| लयः | कालपरिमाणः | | | | | |
|---|---|---|---|---|---|---|
| | परमाणुः | अणुः | व्यञ्जनम् | ह्रस्वः | दीर्घः | प्लुतः |
| मध्यः | क/८ | क/४ | क/२ | क | २क | ३क |
| द्रुतः | क/१६ | क/८ | क/४ | क/२ | क | १.५क |
| विलम्बितः | क/४ | क/२ | क | २क | ४क | ६क |

## लघुगुर्वोः कालसंश्लेषः

यद्यपि ह्रस्वं लघु , दीर्घं च इत्यादिसूत्रैः विहिता लघुगुरुसंज्ञा ह्रस्वदीर्घोद्देश्यिका, तथापि कालेन परिच्छिन्नत्वं तयोः लघुगुरुसंज्ञयोः नास्ति। ह्रस्वदीर्घयोः अभिधान्तरमात्रमेव विधीयते एतैः सूत्रैः। तत्र हि कारणानि -

1. संज्ञिप्रभेदाभावः - ह्रस्वं लघु इति सूत्रेण एकमात्रिकस्य ह्रस्वस्य लघुसंज्ञाविधानेऽपि तादृशैकमात्रिकह्रस्वस्य पुनः संयोगपरकत्वात् गुरुत्वं शास्ति संयोगे गुरु इति सूत्रम्। उभयत्रापि ह्रस्वस्यैव संज्ञित्वेऽपि लघुगुरुसंज्ञायाम् एकमात्राकालावच्छिन्नत्वं न सिध्यति, संज्ञिभेदाभावात्। एवञ्च, द्विमात्रिकोच्चारणकालावच्छिन्नदीर्घस्य गुरुसंज्ञां विदधाति - दीर्घं च इति सूत्रम्। अत्रापि गुरुसंज्ञायां दीर्घस्य संज्ञित्वेऽपि न तस्याः द्विमात्राकालावच्छिन्नत्वं, पूर्वशास्त्रेण साङ्कर्यात्। एतत्सूत्रनिर्देशात् यदि गुरोः द्विमात्रिकत्वं स्वीक्रियते तर्हि पूर्वशास्त्रनिर्देशेन सङ्करः, संयोगे गुरु इत्यत्र एकमात्रिकस्य ह्रस्वस्य संज्ञित्वात्। अयं हि निष्कर्षो यत् लघोः एकमात्रिकोच्चारणकालावधित्वं तथा गुरोः द्विमात्रिकोच्चारणकालावच्छिन्नत्वं च न युक्तः संज्ञिनः साङ्कर्यात्।

2. सूत्रभेदगौरवः - लघोः एकमात्रिकत्वं तथा गुरोर्द्विमात्रिकत्वं स्वीक्रियते चेत् लघुगुरुविषये पृथक्तया सूत्रविधानमनावश्यकम्। एकमात्रिकस्य ह्रस्वविधानं तथा तस्य पुनः लघुसंज्ञाविधाने गौरवः। एवं दीर्घस्यापि। यद्येवमुच्यते संयोगपरकस्य ह्रस्वस्य पुनः गुरुसंज्ञायां संज्ञित्वं दृश्यते इत्यतः पृथक्सूत्रविधानम् आवश्यकं, तदपि न युक्तं - तदानीं केवलं संयोगपरकह्रस्वस्य कृते सूत्रमेकमेव अलमासीत्।

3. छन्दश्शास्त्रे पदान्तगतस्य, सानुनासिकानुस्वारविसर्जनीयस्य च ह्रस्वस्य गुरुत्वमङ्गीकृतम्[6]। गुरुविषये द्विमात्रिकस्य चेत् ग्रहणं , तत्तत्स्थलघटितह्रस्वस्यापि द्विमात्रिकतापत्तिः स्यात्। न च एकमात्राकालपरिच्छिन्नह्रस्वस्य द्विमात्रिकत्वं कल्पयितुं शक्यम्।

अयमाशयो यत् ह्रस्वदीर्घनिष्ठः एकमात्रिकद्विमात्रिककालपरिमितिः लघुगुर्वोः नास्ति। अक्षराणां लघुगुरुनिर्देशस्तु काचित् प्रक्रियानुसारिणी अभिधा, यस्यां कालावधित्वे सत्त्वेऽपि सः कालः उच्चारणेन न अवच्छिन्नम्। उच्चारणावच्छिन्नकालपरिमितिः ह्रस्वदीर्घप्लुतानामेव सम्भवति। किञ्च, गच्छति इति उच्यमाने गकारोत्तराकारस्य गुरुत्वेऽपि उच्चारणकालावच्छिन्नद्विमात्रिकत्वाभावः। ननु समयाक्रमस्तु अनुभूयते इति

6 सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।
वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः॥ (वृत्तरत्नाकरः, १.९)

चेत् तस्य तु उच्चारणकालपरिच्छिन्नत्वं नास्ति। तत्रैवं परिष्कारो यत् प्रथमाया मात्राया उच्चारणावच्छिन्नता द्वितीयायास्तु अस्पृष्टस्थितिः। तेन यो द्विमात्रानुभवस्तत्र तु प्रकृतनिमयव्यतिरेकेण सम्भवः।

## उपसंहारः

अथ ह्रस्वादिलघ्वादिपर्यालोचनपरम्परया कालपरिच्छित्तिपरिष्कृतिः स्फुटा। उच्चारणावच्छिन्नकालसम्बन्धस्य ह्रस्वादिनिष्ठतेति समयः। लघ्वादिषु तादृशः कालानुभवस्तु आभासते इति विवेकः। अपि च ह्रस्वादिनिष्ठनिमेषात्मककालनिश्चयो मध्यादिलयनिष्ठ एव। लघुगुरुविषयान्तःपातितां विहाय प्लुतविषये नास्ति कश्चित् विचारक्रमः, तस्य मात्राविषयकस्पष्टतावशात्। तेन लघुगुरुविषयासम्बन्धात् न तस्य चर्चा। क्वचिद् वा तस्य पद्यकृतौ दर्शनं चेत् परिष्कारावश्यकता निश्चिता स्यात्। किञ्च, अण्वादिविषयपरिष्कृतौ अस्ति तावद् इतोऽपि आलोचनार्हतेति शम्॥

## सन्दर्भग्रन्थसूची


1. केदारनाथः (सम्पा.)। १९३८। हलायुधप्रणीत-मृतसञ्जीवनीव्याख्योपेतं पिङ्गलाचार्यप्रणीतं छन्दश्शास्त्रम्। निर्णयसागरमुद्रणयन्त्रालयः।

2. खेमराजः श्रीकृष्णदास (सम्पा.)। १८१९। पाणिनिप्रणीता अष्टाध्यायी। श्रीवेङ्कटेश्वर-मुद्रणालये, मुम्बई।

3. तैत्तिरीयप्रातिशाख्यम्। TITUS database। आकलनसंकेतः
https ://titus.uni-frankfurt.de/texte/etcs/ind/aind/ved/yvs/tp/tp.htm

4. त्रिपाठी, रा. प्र. (सम्पा.)। १९८९। शिक्षासंग्रहः। १ सं.। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः। आकलनसंकेतः
ttps ://archive.org/details/dli.ernet.383709

5. पण्डितमण्डली (सम्पा.)। १८९४। महर्षिशौनकप्रणीतम् उव्वटकृतभाष्ययुतम् ऋक्प्रातिशाख्यम्। बनारस् प्रिन्टिंग् प्रेस।

6. मेहरचाँद लछमन दास (सम्पा.)। १९३९। अथर्वप्रातिशाख्यम्। अरिऐन्टल् एण्ड फरन् बुकसेलर् एण्ड पाबलिशर्स, लहौर।

7. वि. वेङ्कटरमणशर्मा (सम्पा.)। १९३४। कात्यायनप्रणीतं वाजसनेयिप्रातिशाख्यम्। मद्रपुरीविश्वविद्यालयः।

8. वि. वेङ्कटरमणशर्मा (सम्पा.)। १९३०। तैत्तिरीयप्रातिशाख्यम्। मद्रपुरीविश्वविद्यालयः।

9. शर्मा, के. (सम्पा.)। १९६२। भट्टनारायणविरचित-नारायणीव्याख्योपेत भट्टकेदारविरचितो वृत्तरत्नाकरः। चौखम्बा संस्कृत सिरीज अफिस।




# वृत्तेश्चिदुपरागविमर्शः

राजेश अधिकारी

सारांश

अविद्यान्तर्वर्तमानाः करणाकरणधीविहीनाः त्रिविधदुःखं सततं भुज्यमानाः अविवेकप्रायाः मूढाः जरारोगाद्यनेकानर्थझञ्झावातैरनुक्षणं क्षीयमाणाः अशनायापिपासादीन्द्रियकोटरपटलपरि-मण्डितं मित्रपुत्रकलत्राद्यात्मजप्रसूनसहस्रसङ्कुलितं स्वरादिभुवनचतुर्दशफलविशिष्टं संसारवृक्षं समा-रूढाः सन्तः सकृत् सुखलेशमन्विषन्तो जीवन्ति, दोलायन्ते चानादिकालात् जनिमृतिचक्रवाताघातात्। नेयं स्थितिर्मुमुक्षूणाम् आत्मतत्त्वविजिज्ञासूनां विवेकिनाम्। ते हि श्रोतव्यादिश्रुतिभिः अवबोधितं परं ब्रह्मामृतं लब्ध्वा रमन्ते तत्र। एवञ्च श्रोतव्यादिश्रुतेरवगम्यते यत् अकृतश्रवणादिविधिभिः न शक्यते लब्धुमात्मविज्ञानम्। दर्शनश्रवणादि च गुरूपदिष्टवेदवाक्यानामिह विवक्षितम्। सत्यज्ञानानन्तादिधर्मवतो ब्रह्मणो ज्ञानाय हि निखिलं वैदिकं दर्शनं, तज्ज्ञानोपायाश्च भूयो भूयः शास्त्रेषु दरी-दृश्यन्ते। एवमेव वैदिकज्ञानवत् लौकिकाः अपि विषयाः मुमुक्षुणा ज्ञातव्याः, "नेति नेति" इत्यादि-रूपेण क्रमेण अनन्तरम् अपनोदनाय। तत्र लौकिकानां बाह्यविषयाणाम् अपरोक्षानुभूत्यर्थं नूनम् अन्तःकरणवृत्तेः आवश्यकता अस्तीति निश्चप्रचम्। विना अन्तःकरणं ज्ञानोत्पत्तेः असम्भवत्वात्। अतश्च किं तद् अन्तःकरणं, का च तदीया वृत्तिः, कथं तस्य बहिर्निर्गतिः, कथं वा बाह्यविषयापरोक्ष्यम् इत्येतत् सर्वम् अज्ञात्वा ब्रह्मभिन्नस्य प्रापञ्चिकवस्तुनः अपनोदनं न शक्यते विधातुं मुमुक्षुणा। प्रस्तुतेऽस्मिन् शोधप्रबन्धे तस्मात् लौकिकानां विषयाणां घटपटादीनां कथंकारा अपरोक्षानुभूतिः भवति, तज्ज्ञानाय च अन्तःकरणवृत्तेः चैतन्येन सह सम्बन्धात्मकं यत् प्रयोजनं वर्तते तद्विषये सविस्तारं व्याख्यानं विधास्यामः।

(मुख्यशब्दाः - ज्ञानम्, अन्तःकरणम्, वृत्तयः, जीवचैतन्यं)

……………………

## अन्तःकरणवृत्तिसामान्यस्वरूपम्

अन्तःकरणं भवति इन्द्रियजन्यं ज्ञानम्[1]। अन्तःकरणस्य वृत्तयः पञ्च इति प्रसिद्धम्। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पञ्च इन्द्रियाणि सन्ति, तानि निमित्तीकृत्य शब्दादिविषयान् प्रति अन्तःकरणस्य वृत्त्या एव इन्द्रियाणि यान्ति। तस्य वृत्तयः कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव[2] इति श्रुतिवाक्येन प्रतिपादितम्। यद्यपि पञ्चवृत्तिर्मनोवद्व्यपदिश्यते[3] इति वेदान्तसूत्रे भाष्यकृता पूर्वपक्षस्य आक्षेपं निरूपयता उक्तं यत् कामादयो न मनोवृत्तयः, पञ्चत्वातिरेकप्रसङ्गात् इति, तथापि अत्र पञ्चत्वसंख्यायाः प्रतिपादनेच्छया तथा अस्वीकारः स्यात् भगवताम्, अन्यत्र तु बहुषु स्थलेषु तैः कामादेः अन्तःकरणवृत्तित्वं श्रुतिनिरूपितं मतं दृढतया अङ्गीकृतमिव दृश्यते। ननु श्रोत्रादिनिरपेक्षाः अपि सन्ति विषयाः दिक्कालादयः, तेषामपि अन्तःकरणवृत्तित्वमस्त्येव, इत्यतः पञ्चत्वसंख्यातिरेकः तदवस्थ एवास्ति इति शङ्का जायते। ततो रक्षणाय भाष्यकृता योगोक्ताः पञ्च वृत्तयः सन्तु इति समाधानं प्रदत्तम्। सम्प्रति संङ्कल्पादेः कथमन्तः करणवृत्तौ अन्तर्भाव इति चेदुच्यते - गीतायां प्रयुक्तस्य धृतिशब्दस्य अन्तःकरणवृत्तिविशेषात्मकेन प्रतिपादितं भाष्यकृद्भिः। तथाहि यदा देहेन्द्रियादयः अवसादं प्राप्नुवन्ति तदा तमवसादम् अपवारयति धृतिरूपः अन्तःकरणस्य वृत्तिविशेषः। तस्माच्च उत्तम्भितानि इन्द्रियाणि शरीरं वा नावसीदन्ति। सम्प्रति संकल्पस्य अन्तःकरणवृत्तित्वं प्रतिपाद्यते। प्रत्यक्षमेवाह भगवान् भाष्यकारः – सङ्कल्पोऽपि मनस्यनवत् अन्तःकरणवृत्तिः[4] इति। किं कर्तव्यं, किमकर्तव्यमिति विवेकपूर्वकं कस्यचिदेकस्य मतस्य समर्थनं वस्तुतः

---

1 वेदापरिभाषा (विषयपरिच्छेदः)

2 बृहद्. 1.5.3

3 ब्रह्म 2.4.12

4 छान्दोग्य. 7.4.1 (शाङ्करभाष्यम्)

अन्तःकरणस्यैव कार्यम्। अत एव संकल्पविकल्पात्मिकायाः अन्तःकरणवृत्तेरभिधा मन इति। विभागपूर्वकं समर्थितो यो विषयस्तत्र एव खलु जायते चिकीर्षाबुद्धिः बुद्धिमताम्। सा च मनस्यनान्तरमेव भवति इति सङ्कल्पस्य अन्तःकरणवृत्तित्वप्रतिपत्तिः। मन्त्रानधीयीय इति मनस्यनानन्तरं मन्त्रावृत्त्यारम्भादिः सङ्कल्पस्य कार्यम्।

## वृत्तेर्बहिर्निर्गमनप्रकारः

त्रिविधं हि चैतन्यं विषयचैतन्यं, प्रमाणचैतन्यं प्रमातृचैतन्यं चेति। तत्र अन्तःकरण-वृत्त्यवच्छिन्नं यच्चैतन्यं तत् प्रमाणचैतन्यमित्युच्यते। अत्र शङ्का जायते यत् अन्तःकरणं तावत् अनिन्द्रियतया प्रत्यक्षं तथा चेत् आन्तरस्य तस्य बहिर्गमनं न सम्भवति। अतः कीदृशी एषा परिणामात्मिका वृत्तिः। यदि एवमुच्यते यत् अन्तःकरणं दीर्घप्रभारूपपरिणामं धत्ते, ततश्च सौरकिरणसत्त्वात् विषयदेशं प्रति याति इति तन्न सम्भवति। यतो हि अन्तःकरणं न चक्षुः, लोके चाक्षुषस्यैव विषयस्य सौरालोकसंसर्गेण परिणामदर्शनात्। यदि अन्तःकरणस्य अणुपरिमितिं स्वीकृत्य उच्येत यत् प्राणनक्रियायाः आश्रयः अन्तःकरणं, तस्मात् प्राणनक्रियामाश्रित्य दूरवर्तिध्रुवादिपर्यन्तं गच्छति अन्तःकरणमिति, तदेव अन्तःकरणवृत्तिरिति, तर्हि अन्तःकरणेन सह जीवस्यापि गतत्वात् जीवस्य निर्जीवत्वापत्तिरुपपद्यते। किञ्च अन्तःकरणस्य मध्यमपरिमाणत्वे देहरपरिमाणत्वे सत्यपि दोषः स्यात्। तथाहि देहपरिमाणवत्त्वस्वीकारे अन्तःकरणस्यापि देहवत् मन्दगतित्वं स्वीकार्यं, तथा सति शीघ्रं विषयप्रतिभासानुपपत्तिः स्यात्। अन्तःकरणस्य च विभुत्वे निष्क्रियत्वापत्तिः स्यात्। किञ्च घटचक्षुषोः संयोगे सत्येव यदि घटादिगतचैतन्यस्फुरणं स्वीक्रियते तर्हि कथं पृथक्तया अन्तःकरणवृत्तेः स्वीकार इति स्वाभाविक आक्षेपः। एवंरूपेण परिणामः कथमपि न स्वीक्रियते। तस्मात् कोऽयं परिणामः, किं प्रकारिका च वृत्तेरन्तःकरणस्य बहिर्गतिरिति विवेच्यम्।

अन्तःकरणस्य वत्तिरूपा बहिर्गतिः सम्भवत्येव, नात्र काचिद्विमतिः। तथाहि पूर्वपक्षिभिः आक्षिप्तास्ते पक्षाः कल्पनामात्रम्। अन्तःकरणस्य अणुपरिमाणत्वं न सम्भवति यतो हि देहव्यापि सुखाद्युपलब्धिः भवति। मनसो देहपरिमाणत्वमपि न सर्वगतमस्ति अनित्यत्वात्। प्राणनशक्तेः य आश्रयस्तस्य मनस उत्क्रान्त्यादिगतिश्रुतेश्च मध्यमपरिमाणात्वासम्भवः। तथा चाह उत्क्रान्तिं श्रुतिमाता - स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति[5] इति। एवञ्च गतिरपि श्रूयते - ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति[6] इति तथा आगमनमपि श्रूतम् - तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे[7] इति। एवञ्च सेन्द्रियस्यैव मनसः उत्क्रान्त्यादिश्रवणात् तस्य देहपरिमाणत्वं न सर्वगतमस्ति।

किञ्च यदुक्तं शीघ्रं विषयप्रतिभासानुपपत्तिरिति तदपि न सम्भवति। मनसः अतिस्वच्छद्रव्यत्वात् सौरालोकवत् शीघ्रमेव विषयान् भासयति मनो वृत्त्या। पुनश्च अन्तःकरणस्य स्वतो बहिर्गमनाभावेऽपि चक्षुरादिद्वारा बहिर्गमने न कश्चिदपराद्धान्तः। दृश्यते च लोके तडागोदकस्य स्वतः बहिर्गमनाभावेऽपि कुल्याद्द्वारा केदारदेशादिबहिर्गमनम्। तथाहि यथा तडागस्य वारिराशिः कुल्यादिद्वारा केदारान् प्रविश्य केदारपरिमाणतुल्यपरिमाणं धत्ते, यथा च पावकः अयःपिण्डसम्पर्के अयःपिण्डपरिमाणतुल्यपरिमाणं धत्ते, अन्तःकरणवृत्तिः चक्षुरादिद्वारा विषयदेशं गत्वा विषयपरिमाणतुल्यपरिमाणं धत्ते। एवंप्रकारेण अन्तःकरणस्य विषयानुरुपपरिमाणवृत्तिजनकत्वम्।

एवम्प्रकारेण अन्तःकरणस्य द्रव्यत्वमपि गम्यते। तथाहि क्रियावद् गुणवत् च द्रव्यं भवति, अन्तःकरणस्य च परिमाणवत्त्वात् द्रव्येष्वन्तर्भावः। किञ्च मनसः स्पर्शराहित्यात् अनारम्भकत्वं स्यादिति न वक्तव्यम्।

---

5 कौषीत 3.4
6 कौषीत 1.2
7 बृहद्.4.4.6




Figure 28.1: विषयविषयिभावसम्बन्धः

यतो हि कस्यापि द्रव्यस्य आरम्भकत्वे सावयवत्वस्यैव प्रयोजकता। मनसश्च सादित्वेन सावयवत्वं प्रतिपादितं पूर्वम्। तस्मात् तस्य आरम्भकत्वे न काचित् शङ्का। अन्तःकरणवृत्तेश्च बहिर्निर्गमने न देहस्य निर्जीवत्वं सम्भवति, यतो हि वृत्तेः ध्रुवादिपर्यन्तगमने यथा चक्षुरादीनां सम्बन्धे न काचित् विमतिस्तथैव देहसम्बन्धेऽपि अविरोध एव।

## वृत्तिप्रयोजनविचारः

वृत्त्या जीवचैतन्यविषययोः सम्बन्धप्रतिष्ठापनं चिदुपरागो नाम चित्सम्बन्धः। चिदुपरागार्था च वृत्तिः, चैतन्येन साकं सम्बन्धार्था वृत्तिरित्यर्थः। सर्वगतस्य जीवस्य विषयेण सह वृत्तिकृताः के सम्बन्धाः भवितुमर्हन्ति इति विषये आचार्याणां बहूनि मतानि सन्ति। तथाहि सम्बन्धस्तावत् त्रिधा भवितुमर्हति स्वरूपसम्बन्धः, तादात्म्यसम्बन्धः, संयोगो वा। तत्र स्वरूपसम्बन्धः भवितुं नार्हति, यतो हि जीवस्य सर्वगतत्वात् विषयेण सह तद्देशस्थजीवचैतन्यस्य सम्बन्धः प्राक्सिद्धः एव, अतो न वृत्तिकृतः स्वरूपसम्बन्धः। पूर्वतः अभिन्नयोरेव तादात्म्यसम्भवः शक्यते वक्तुं, जीवचैतन्यस्य विषयानुपादानत्वात् तादात्म्यमपि न सम्बन्धः। संयोगस्थलेऽपि हस्तपुस्तकवत् उभयोरेकतरस्य क्रियावत्त्वस्वभावः स्यात्, साव-यववस्तुनोश्च संयोगः प्रसिद्धः। प्रकृते च द्वयोरेव निष्क्रियत्वात्, जीवचैतन्यस्य निरवयवत्वाच्च संयोगः असिद्धः। ननु निष्क्रिययोः सुवर्णपार्थिववस्तुनोः अर्थात् पृथ्वी-तैजसयोः आरम्भादेव संयोगो दृश्यते यद्वत् तद्वत् जीवचैतन्यविषययोः संयोगाङ्गीकारे को दोषः। अत्रोच्यते यद् यदि सुवर्णवदत्रापि जीवचैतन्यविषययोः आरम्भादेव संयोगः स्वीक्रियते तर्हि वृत्तिनिर्गमनानर्थ्यक्यमेव स्यात्। यतो हि तयोः संयोगे सिद्धे एव सति कथं वृत्तेः प्रयोजनता, किञ्च एवंरूपेण विषयेण सह संयोगे स्वीक्रियमाणे जीवस्य सर्वज्ञत्वमपि स्यात्। तस्मात् न तयोः संयोगः। तर्हि कोऽयं चिदुपरागार्था वृत्तिरिति चेत् आचार्यैः वर्ण्यमानेषु सम्बन्धेषु प्रसिद्धाः विषयविषयिसम्बन्धः, परम्परासम्बन्धः, संयोगजसंयोगसम्बन्धः, तादात्म्यसम्बन्धः इत्यादयः उल्लेख्याः सन्ति।

## विषयविषयिभावसम्बन्धः

केचन जीवचैतन्यविषययोः मध्ये विषयविषयिभावसम्पर्कमङ्गीकुर्वन्ति। वृत्त्युत्पत्तेः प्राक् च एष सम्बन्धः न तिष्ठति। वृत्तिनिर्गमात्परमेव उत्पद्यते सः। स च सम्बन्धः अनिर्वचनीयो भवति। विषयः अत्र ज्ञानस्य कर्म, विषयी च ज्ञानक्रियायाः कर्ता जीवः। ज्ञानक्रिया च वृत्त्या एव भवति। अनयोरेव सम्बन्धः ज्ञानकाले अनिर्वचनीयरूपेण उत्पद्यते।

### परम्परासम्बन्धः

विषयविषयिभावसम्बन्धमतम् अपोषयन्तः केचन आचार्याः कथयन्ति यत् विषयविषयिभावसम्बन्धः परोक्षापरोक्षसाधारणः यदि स्वीक्रियते, तर्हि परोक्षस्थले अनुमित्यादौ या वृत्तिरुदीयते, तस्यां जीवचैतन्येन सह

अनुमेयस्य विषयविषयिभावसम्बन्धः स्वीकार्यः । तत्र च इन्द्रियवृत्तेः निर्गमनं न स्वीक्रियते[8], अपरोक्षस्थलमात्रे एव तन्निर्गमनसम्भवात्। एवञ्च यथा परोक्षस्थले अनुमेयविषय-जीवचैतन्ययोः सम्बन्धाभावेऽपि वृत्तिनिर्ग-माभावेऽपि अपरोक्षस्थलमात्रे एव तन्निर्गमनसम्भवात्। एवञ्च यथा परोक्षस्थले अनुमेयविषय-जीवचैतन्ययोः




Figure 28.2 : परम्परासम्बन्धः

सम्बन्धाभावेऽपि वृत्तिनिर्गमाभावेऽपि वा ज्ञानोत्पत्तिर्जायत इति प्राप्तम्, तथैव अपरोक्षस्थलेऽपि यद्विषया वृत्तिर्जीवस्य स एव तस्य प्रकाश्यो नान्यः इति नियमात् वृत्तिनिर्गमनं व्यर्थं जायते। अस्मादेव नियमात् जीव-चैतन्यस्य सर्वगतत्वमतेऽपि सर्वदा सर्वविषयप्रत्यक्षातिप्रसङ्गाभावः । न हि अनिर्गतघटाकारवृत्त्या अपि पट-ज्ञानसम्भवः । अतः प्रत्यक्षस्थले वृत्तिस्वीकार एवास्तु, तन्निर्गमनं व्यर्थं भवतु। विवरणकारेण च वृत्तिनिर्गमनं स्वीकृतम्, तस्मात् तादृशसम्बन्धे आचार्याणामरुचिः ।

तादृशाक्षेपपरिहाराय परम्परासम्बन्धः स्वीकार्यः । तथाहि जीवचैतन्यं हि विषयाकारान्तःकरणवृत्तेर-धिष्ठानम्। अतः जीवचैतन्येन सह विषयस्य तादात्म्यसम्बन्धोऽस्ति। ज्ञानकाले च वृत्तिविषययोः संयोगो वर्तते। विषयावभासकरूपेण च जीवचैतन्यं विषयसन्निहितं वर्तते। एवञ्च वृत्तिविषययोः संयोगात् परं जीव-विषययोः विषयसंयुक्तवृत्तितादात्म्यसम्बन्धः इति चिदुपरागो भवति। अयमेव परम्परासम्बन्ध इत्युच्यते।

## संयोगजसंयोगसम्बन्धः

परम्परासम्बन्धोऽपि केषाञ्चिद मतमस्ति। यतो हि अपरोक्षजीवचैतन्येन सह सुखादेः साक्षात् सम्बन्ध एव भवति। तथैव बाह्यवस्तुभिः सहापि जीवचैतन्यस्य साक्षात्सम्बन्धेन एव भाव्यम्। अतः अस्मिन् पक्षे संयोगजसंयोगसम्बन्धः स्वीक्रियते। तथाहि वृत्तिविषययोः संयोगे सिद्धे वृत्तेरधिष्ठानेन जीवचैतन्येनापि विषयस्य संयोगजसंयोगसम्बन्धः जायते। विषयममुं दृष्टान्तेन विस्तार्यते। तथाहि यथा हस्तस्य शरीरावयवत्वात् हस्तौ शरीरकारणभूतौ अवयवौ, शरीरञ्च अवयवि। वृक्षो हि भिन्नः न शरीरकारणम्। साम्प्रतं हस्ताभ्यां वृक्षे संस्पृष्टे सति हस्तावच्छेदेन शरीरकारणस्य हस्तस्य शरीराकारणस्य वृक्षस्य च संयोगो जातः, एवञ्च हस्तकार्यशरीरेण सह हस्ताकार्यवृक्षस्य संयोगजसंयोगः सिद्धः। एवमेव अधिष्ठानरूपं जीवचैतन्यं वृत्तेः कारणम्, वृत्तिश्चातः तत्कार्यम्। वृत्तिश्च विषयस्य अनुपादानम्। एवञ्च जीवचैतन्यस्य कार्यरूपवृत्तेः अकार्यरूपविषयस्य च संयोगे जाते वृत्तेः कारणभूतजीवचैतन्यस्य अका-रणभूतविषयस्य च संयोगो भवति। अतः सिद्धमेतद्यत् विषयेण सह घटाद्याकारवृत्तेः संयोगे जाते घटः प्रकाशमेति। तस्मादस्मिन् पक्षे वृत्त्यवच्छेदेन जीवचैतन्यविषययोः संयोगजसंयोगसम्बन्धः स्वीक्रियते।

## तादात्म्यसम्बन्धः

विवरणकारस्य मते जीवचैतन्यं न वृत्तेरधिष्ठानम्, तस्मात् संयोगजसंयोगो न तदभिमतमिति ज्ञा-यते। अतः कैश्चित् घटादिविषयेण सह जीवचैतन्यस्य चिदुपरागो नाम घटादिना सह जीवचैतन्यस्य ता-दात्म्यसम्बन्धः एवेति स्वीक्रियते। सर्वस्य प्रपञ्चस्य बिम्बभूतत्वात् हि ब्रह्मचैतन्यं घटादेरुपादानम्। तस्मात्

[8] एवञ्च परोक्षस्थले वृत्तेर्निर्गमनाभावात् (सिद्धान्तलेशसंग्रहः – प्रथमो भागः, पृष्ठम् – 315)




Figure 28.3 : संयोगजसंयोगसम्बन्धः

उपादान-उपादेययोर्मध्ये तादात्म्यस्य सदातनत्वात् ब्रह्मचैतन्यविषययोः तादात्म्यं पूर्वसिद्धमिति निश्चप्रचम्। पुनश्च ब्रह्मचैतन्य-जीवचैतन्ययोश्च बिम्बप्रतिबिम्बयोः दर्पणमुखवत् समकालस्थितिस्वभावसत्त्वात् परस्परैक्यं साधयितुं शक्यते। जीवचैतन्यं च विषयं प्रकाशयति। तस्मात् विषयतादात्म्यापन्न-ब्रह्मचैतन्येन सह विषयावभासकजीवचैतन्यस्य वृत्त्या अभेदाभिव्यक्त्यनन्तरमेव विषयप्रकाशो भवति। अतः तादात्म्यसम्बन्धस्वीकारे न कश्चिद्दोषः।

ननु सर्वथापि जीवचैतन्यविषययोः अभेदाभिव्यक्तिरेव वृत्तेः कार्यमिति आयाति इति चेत्, अत्र उच्यते यत् विवरणकारेण जीवस्य सर्वगतत्वं न स्वीक्रियते, अपि तु परिच्छिन्नत्वमेव अङ्गीक्रियते। अतः जीवस्य सर्वगतत्वमते जीवचैतन्य-विषययोः सम्बन्धस्य पूर्वसिद्धत्वादेव न सम्बन्धापेक्षा अस्ति। तदर्थमुभयोः अभेदप्रकाश इष्यते, तदर्थं खलु वृत्तेः प्रयोजनमस्ति। जीवस्य परिच्छिन्नत्वमते च वृत्तिमवलम्ब्य जीवचैतन्यस्य विषयदेशगमनात् परं विषयाधिष्ठितब्रह्मणा सह जीवचैतन्यस्य अभेदाभिव्यक्तिर्भवति, ततश्च विषयप्रकाशो भवतीति गम्यत इत्यतः उभयोर्भेदो वर्तत एव। किमिदं मतद्वित्वं जीवचैतन्यस्य? अत्र एवं समाधानं भवितुमर्हति यत्, सर्वगतत्वेऽपि जीवस्य परिच्छिन्नता वर्तते। कथमिति चेत्, व्यापकोऽपि जीवः विशिष्टपुरुषान्तःकरणोपहितः सन् यं विषयमवभासयेत्, स एव विषयः केवलं तस्य पुरुषस्य कृते प्रकाशमेति, नान्यस्य। तस्मात् सर्वस्य सर्वविषयावभासोऽपि न भवतीति सिद्धम्। एवंरूपेण वृत्तेः चित्सम्बन्धता निरूपिता।




Figure 28.4 : तादात्म्यसम्बन्धः

## उपसंहारः

एतावता संक्षेपेण वृत्तेः चिदुपरागप्रकारः प्रदर्शितः, एतदतिरिच्यापि वृत्तेः प्रयोजनान्तराणि सन्ति। यथा अभेदाभिव्यक्तिः, आवरणाभिभवः इत्यादयः। वृत्त्या एव ब्रह्मचैतन्येन साकं जीवचैतन्यस्य अभेदाभिव्यक्तिः भवति, एवमेव उभयोपलक्षितेन शुद्धचैतन्यरूपेणापि अभेदाभिव्यक्तिः सम्भवा। तथैव जीवस्य यद्यपि व्यापकत्वं अन्तःकरणावच्छेदेन अनावृतत्वं च वर्तते, तथापि अविद्यावृतत्वात् अप्रकाशमानत्वं स्वीकार्यम्। विषयाः जडस्वभावाः भवन्ति, अतः स्वतः न प्रकाशिताः भवन्ति इति स्वाभाविकम्। जीवः अपि आवृतत्वात् अप्रकाशमान इति ज्ञातम्। स्वीकार्यञ्च जीवस्य आवरणमस्तीति। एतत् स्वीकृत्य विषयानवभासकत्वमाक्षिप्य वृत्त्या आवरणभङ्गे सत्येव विषयप्रकाशः वर्णयितुं शक्यते। एवञ्च आवरणभङ्गः वृत्तेः अपरा प्रयोजनता। स्वापकाले रथादीनां सृष्टौ अपि अन्तःकरणवृत्तेः मुख्या अपेक्षा वर्तते। तथाहि तत्र

यद्यपि रथादयः पन्थानो वा न तिष्ठन्ति, अतः कथं रथादिसाधनाभावे सति रथादिसृष्टिः शक्यते वक्तुमिति प्रश्ने उच्यते यत् स्वयमेव बाह्यप्रपञ्चस्य सुखदुःखरूपायाः विचित्रायाः वासनारूपायाः अन्तःकरणवृत्तेस्तदा वर्तमानत्वात् स्वापकाले तादृशान्तःकरणवृत्तेः उपलब्ध्यर्थं स्वप्नः प्रपञ्चः दृश्यत्वेन विवर्तते। तस्मात् अन्तःकरणवृत्त्या एव तस्मिन् काले स्वाप्नप्रपञ्चस्योत्पत्तिर्भवति। उत्क्रान्तिकाले कर्मवशात् आत्मा विशेषविज्ञानवान् भवति स्वप्ने इव। वासनारूप-अन्तःकरणवृत्तिविशेषाश्रिततत्वात् योगिनामात्मा विज्ञानेन सहितः एव भवति। अन्तःकरणवृत्त्याश्रितवासनायाः उत्क्रान्तिकाले वर्तमानत्वात् तदा कर्मानुशील-नाय स्वातन्त्र्यं तिष्ठति योगिनां, तस्मात् योगधर्मानुपालनं पुण्यार्जनं च अप्रमत्तैः विधातव्यम्। स्वातन्त्र्येण हि सविज्ञानत्वे सर्वः कृतकृत्यः स्यात्[9] इति च श्रुतिभाष्ये आह भगवान्। इदमपि वृत्तेः प्रयोजनान्तरमित्योम्।

## शब्दसंक्षेपः

1. कौषीत - कौषीतक्युपनिषत्
2. छान्दोग्य - छान्दोग्योपनिषत्
3. ब्रह्म - ब्रह्मसूत्रम्
4. बृहद् - बृहदारण्यकोपनिषत्

## सन्दर्भग्रन्थसूची


1. अप्पय्यदीक्षितः, सिद्धान्तलेशसंग्रहः (प्रथमो भागः), प्रो. पारसनाथ द्विवेदी (सम्पा), सम्पूर्णानन्दसं-स्कृतविश्वविद्यालयः, वाराणसी, 2005
2. ब्रह्मसूत्रशाङ्करभाष्यम्, आचार्यजगदीशशास्त्री, सम्पा. मोतीलाल बनारसीदास, षष्ठं संस्करणम्-2018
3. माधवाचार्यः, सर्वदर्शनसंग्रहः, प्रो. उमाशङ्करशर्मा, सम्पा. वाराणसी, चौखम्बा, 2016
4. सेनगुप्ता, ललिता, सिद्धांतलेश संग्रह : ओरिएंट प्रेस, कलकत्ता, 1413




9 बृहद्.4.4.2 शाङ्करभाष्यम्